**अतीरणात्**

इत्यसंतीरणात्। संतीरणं पुनर्विषयोपनिध्यानपूर्वकं निश्चयाकर्षणम्। **अत एव चान्यापीति** विस्तर। अत एवासंतीरणादन्यापि मानसी **क्लिष्टा** रागादिसंप्रयुक्ता। **अक्लिष्टा वा** [1]क्षयानुत्पाद-[1]ज्ञानानिवृताव्याकृता प्रज्ञा न **दृष्टिः। रूपालोचनार्थेनेति**। चक्षुर्न संतीरकत्वेन दृष्टि। किं तर्हि। रूपालोचनार्थेन। प्रज्ञा तु संतीरकत्वेनेति दर्शितं भवति ॥४१॥

**[चक्षुः पश्यति रूपाणि सभागं न तदाश्रितम्।**
**विज्ञानं दृश्यते रूपं न किलान्तरितं यतः ॥४२॥]**

**अन्यविज्ञानसमङ्गिन**[2] इति। अन्यविज्ञानसंमुखीभाविन पुद्गलस्यान्यविज्ञानव्यासक्तस्येत्यर्थः। **पश्येच्चक्षुरिन्द्रियम्**। विषयादिसान्निध्यात्। यस्य तु चक्षुर्विज्ञानं पश्यतीति पक्षः तस्य तद्विज्ञानासंभवाददोष। **तदेव चक्षुराश्रितं विज्ञानं पश्यतीत्यस्तीति**[3]। दर्शनस्य तद्भावे भावात्तदभावे चाभावात्।

**दृश्यते रूपं न किलान्तरितं यतः**

इति। किलशब्दः परमतौ[4]। **तस्याप्रतिघत्वादिति**। विज्ञानममूर्त[5] कुड्यादीन्यतिक्रम्यापि पश्येत्। विज्ञानवाद्याह। **नैव ह्यावृते चक्षुर्विज्ञानमुत्पद्यत** इति। अनाभासगतत्वाद्विषयस्येत्यभिप्रायः। **किं खलु नोत्पद्यत** इति। अप्रतिघत्वात्कुड्यादीनि व्यतिभिद्य कुड्याद्यव्यवहित इव विषये विज्ञानमुत्पत्स्यत इति भावः। **यस्य त्विति**। यस्य मम वैभाषिकस्य पक्ष **चक्षुः पश्यतीति तस्य** मम **चक्षुषः सप्रतिघत्वाद् व्यवहिते कुड्यादिभिर्वृत्त्यभावः**। तस्य चक्षुष आलोचनवृत्त्यभावः। विज्ञानं तर्हि वैभाषिकस्य व्यवहितेऽपि प्राप्नोतीति चोद्यमन्तर्नीतमाशङ्क्य स एव वैभाषिकः पुनराह। **विज्ञानस्याप्यनुत्पत्तिरिति**। यथैव चक्षुषो व्यवहिते वृत्त्यभावो युज्यते। विज्ञानस्याप्यनुत्पत्तिर्विज्ञानवृत्त्यभावः। [6]**आश्रयेण सहैकविषयप्रवृत्तत्वाद् युज्यते**। य एव हि चक्षुषो व्यवहितोऽर्थो विषय स्यात्स एव विज्ञानस्येति युक्ता विज्ञानस्याप्यनुत्पत्तिः। तत्र तु विज्ञानवादिनोऽप्रतिघत्वाद्विज्ञानस्य व्यव-

---

1.1 Mss च क्षयानुतपादना
2 B समंगेन
3 B पश्यतीति
4 B परमतप्रदर्शनः
5 Mss & To. ०मूर्त्ति
6 Mss omit आश्रयेण सह.

हिते विज्ञानमुत्पद्येत । न तूत्पद्यते। तस्माच्चक्षुः पश्यति न विज्ञानमिति सिद्धम्। एवं विज्ञानवादिनि प्रतिषिद्धे तत्पक्षमाचार्यो गृहीत्वाह। **कि नु वै चक्षुः प्राप्तविषयमिति** विस्तर.। **यथा कायेन्द्रियं** प्राप्तविषयं कुड्यादिव्यवहितं विषयं न गृह्णाति। कुड्यादिप्रतिघातात् ततः परेण प्रवर्तितुमलभमानत्वात्। किमेवं चक्षु प्राप्तविषयं कुड्यादिप्रतिघातेन प्रतिहतं सत् तत परेण गन्तुमलभमानं तं कुड्यादिव्यवहितं विषयं न गृह्णातीति। नैतदुच्यते। तस्मात्सप्रतिघत्वादावृतं चक्षुर्न पश्येदिति न वक्तव्यम्। **काचाभ्रपटलस्फटिकाम्बुभिश्चान्तरितं कथं दृश्यत** इति। काचेनाभ्रपटलेन स्फटिकेनाम्बुना चान्तरितं व्यवहितं रूपं कथं दृश्यते। सप्रतिघत्वाद्धि कुड्यादिव्यवहितवत्काचादिव्यवहितं चक्षुर्न पश्येत्। तच्च पश्यतीति सिद्धान्त। **यत्रालोकस्याप्रतिबन्ध** इति। आलोके हि सति विषय आभासगतो भवतीति विज्ञानोत्पत्तिसंभव। एवं हि विज्ञानकारणं पठ्यते। चक्षुरिन्द्रियमनुपहतं भवति। विषय आभासगतो भवति। तज्जश्च मनस्कार. प्रत्युपस्थितो भवतीति। **अत आवृते रूपे** काचादिभिस्तत्रोत्पद्यत **एव चक्षुर्विज्ञानम्**। **यत्र तु प्रतिबन्धो**ऽकाचादिस्वभावै कुड्यादिभिस्तमस्विद्भि[1] **तत्रावृते नोत्पद्यते**। किम्। चक्षुर्विज्ञानमिति। **अनुत्पन्नत्वादावृतं नेक्ष्यत** इति। यत्तर्या कि खलु नोत्पद्यत इत्यनुत्पत्तौ कारणं पृष्टमिदं तत्कारणमिति ब्रूमः। **यत्तर्हि सूत्र** उक्तमिति विस्तर। **चक्षुषा रूपाणि दृष्ट्वा** न निमित्तग्राही भवति नानुव्यञ्जनग्राहीति विस्तर। यस्माच्चक्षु पश्यति तस्मात्पुद्गलश्चक्षुषा पश्यतीत्यभिप्राय। आचार्य प्राह। **तेनाश्रयेणेत्ययमत्राभिसन्धिः**। [2]चक्षुराश्रित्येत्येवात्राभिसंधि[2]। चक्षुषा आश्रयेण विज्ञानेन दृष्ट्वेत्यर्थ.। कथं ज्ञायत इत्याह। **यथा मनसा धर्मान्विज्ञायेति**। मनसा आश्रयेण विज्ञानेन विज्ञायेति भवति। **न** ह्यनन्तरातीतं **मनो धर्मान् विजानाति**। वर्तमानावस्थाया हि विज्ञानं कारित्रं करोति। **आश्रितकर्म वा आश्रयस्योपचर्यत** इति। आश्रितस्य विज्ञानस्य कर्म दर्शनमाश्रयस्य चक्षुष उपचर्यते। विज्ञाने पश्यति सति चक्षु पश्यतीत्युपचार.। **यथा मञ्चा क्रोशन्तीति**। यथा मञ्चस्थेषु पुरुषेषु क्रोशत्सु मञ्चा क्रोशन्तीत्युपचारस्तद्वत्। **यथा च सूत्र** उक्तमिति विस्तर। वैभाषिकाणामप्ययं पक्ष.। न चक्षुर्विजानाति। किं तर्हि। विज्ञानं विज्ञानातीति। अथ चोक्तम्। **चक्षुर्विज्ञेयानि**

---

1 B तमस्विभिः     2 2 Mss omit this sentence

रूपाणि कान्तानीति । तत्राश्रितकर्म आश्रयस्योपचर्यत इत्यवश्यं प्रतिपत्तव्यम् । द्वारं यावदेव रूपाणां दर्शनायेति । द्वारमिव द्वारम् । हेतुराश्रय इत्यभिप्रायः । अनेनागमेन तेनाश्रयेणेति योऽर्थ उक्तस्तमेव समर्थयति । तेन [1]चक्षुषा द्वारेण[2] विज्ञानं पश्यतीति । दर्शने तत्र द्वाराख्येति । चक्षुर्ब्राह्मण द्वारं दर्शनं[3] यावदेव रूपाणां दर्शनायेत्यत्र.[4] । न ह्येतद्युज्यते । दर्शनं रूपाणां दर्शनायेति । अर्थावाचकत्वान्नैतद्युज्यत इत्यभिप्राय । यदि दर्शनं करणं दृश्यतेऽनेनेति दर्शनमिति । कर्तरि वा ल्युट् । पश्यतीति दर्शनमिति । दर्शनायेति वा[5] भावसाधनम् । दृष्टिर्दर्शनं तस्मै दर्शनायेति कथमेतन्न युज्यते । यस्माच्चक्षुर्व्यतिरिक्तं दर्शनं नास्ति । आलोचनमिति चेत् । न । विज्ञानाव्यतिरिक्तत्वात् । विज्ञानमेव ह्यालोचनम् । नातोऽन्यत्पश्याम । यदि तु चक्षुर्द्वारं विवरं रूपाणां दर्शनाय विज्ञानायेत्यर्थो गृह्येत तद्युज्यते । तद्यथा काचित्प्रज्ञा पश्यत्यप्युच्यत इति । पश्यतीत्याप्युच्यत इति । इतिशब्दोऽत्राध्याहार्य । [6]अनेनोपन्यासेन दर्शनविज्ञानयोरनर्थान्तरभाव इति दर्शयति । का पुनरसौ या प्रज्ञैवमुच्यते । या दर्शनात्मिकोक्ता ।

तदन्योभयथार्या धीः.[7]

इति[8] । तस्यैवं जानत एवं पश्यत इति सूत्रे[9] वचनात् । किंचिदिति वचनान्न सर्वं विज्ञानं पश्यतीत्युक्तं भवति । चक्षुर्विज्ञानं हि पश्यतीत्युच्यते । न तु श्रोत्रादिविज्ञानमिति । कान्या [10]दृशिक्रियेति । यस्योपलम्भकत्वं तस्य दर्शनं युज्यत इत्यभिप्रायः । तदेतदचोद्यमिति विस्तरः । यदि विज्ञानं विजानाति । कर्तृभूतस्य विज्ञानस्य कान्या विज्ञानक्रियेति वक्तव्यमिति तुल्यं चोद्यमापद्यते । न च तत्र कर्तृक्रियाभेदः । न कर्तुर्विज्ञानस्य क्रियायाश्च विज्ञानलक्षणाया भेदोऽन्यत्वमस्ति । भवति च कर्तृक्रियासंबन्धव्यपदेशः । विज्ञानं विजानातीति । तद्वदिहापि भवेत् । चक्षुः पश्यतीत्यचोद्यमेतत् । चक्षुर्विज्ञानं दर्शनमित्यपरे । तस्याश्रयभावाच्चक्षुः पश्यतीत्युच्यते । यथा नादस्याश्रयभावाद् घण्टा[11] नदतीत्युच्यते । विज्ञानं तर्हि कस्याश्रयभावाद्रूपं विजाना-

1 B. चक्षुषो
2 B. adds चक्षु
3 B & To drop दर्शनं
4 Mss °येत्यर्थः
5 To च
6 B adds प्रजानातीत्यप्युच्यत इति.
7 Kārikā, VII 1
8 B adds वचनात्
9 B & To add अपि
10 To दृष्टि°
11 Mss. घटं, but Tib. *dril*

तीत्याह । **विज्ञानस्याश्रयभावादिति** । चक्षुर्विज्ञानस्याश्रयभावादित्यर्थ । **तद्विज्ञानं दर्शनमिति रूढं लोक** इति । दर्शनमिति लोके रुढं न तु विज्ञानमिति रूढम् । **कथं गम्यत** इत्याह । **तथा हि** [1]**तस्मिन्नुत्पन्ने रूपं दृष्टमित्युच्यते न विज्ञातमिति । विभाषायामप्युच्यत** इति । स एवार्थोऽभिधीयत इत्यभिप्राय । **चक्षुःसंप्राप्त** चक्षुराभासगतम् । **विज्ञानं तु सानिध्यमात्रेणेति** । नाश्रयभावयोगेनेति दर्शयति । **यथा सूर्यो दिवसकर** इति । यथा सांनिध्यमात्रेण सूर्यो दिवसं करोतीत्युच्यते तथा विज्ञानं विजानातीत्युच्यते । कस्मात् । लोके तथा सिद्धत्वात् । **निर्व्यापारं हीदमिति** विस्तर· । निर्व्यापारमिति निरीहम् । अनेन हि कर्तुरर्थान्तरभूतां क्रियां प्रतिषेधति । **धर्ममात्रमिति** स्वतन्त्रस्य कर्तु प्रतिषेधं करोति । **हेतुफलमात्रं चेति** । असत्यपि कर्तरि हेतुफलयो· [2]कार्यकारणमर्थत्व[3] दर्शयति । **तत्र छन्दत उपचाराः क्रियन्ते** ।[3] यदि[4] वस्तु व्यवहाराङ्गम् । तेनेह व्यवहारार्थसंसिद्ध्यर्थमसदपि सद्रूपेण परिकल्प्य कर्तृक्रियादिव्यवस्थानं क्रियते । चक्षु पश्यति विज्ञानं विजानातीत्येवमादि । **नात्राभिनिवेष्टव्यम्** । भावो भवितपेक्षोऽन्य इत्यादि । **जनपदनिरुक्ति नाभिनिविशेतेति** । जनपदस्तत्र नियता निश्चिता चोक्तिर्जनपदनिरुक्तिः । ता नाभिनिविशेत । कस्मात्[5] । अलेयं निरुक्तिरिति । न वा सर्वामेवार्थवती निरुक्तिं कल्पयेत् । **संज्ञां च लोकस्य नाभिधावेदिति** । आत्मा जीव इत्येवमादिका संज्ञा लोकस्य नाभ्यारोपयेत् । अभूतसमारोपेण । अस्त्यात्मा शरीरादिव्यतिरिक्त इति नातीव गच्छेदित्यर्थ । अथवा संज्ञा च लोकस्य नाभिधावेन्नातिसरेत्[6] । अर्थाभावात् संज्ञापि नास्तीति न कल्पयेदित्यर्थ । अतिसरणमतिक्रमणमित्येकोऽर्थः ॥४२॥

**[उभाभ्यामपि चक्षुर्भ्यां पश्यति व्यक्तदर्शनात् ।**
**चक्षुःश्रोत्रमनोऽप्राप्तविषयं त्रयमन्यथा ॥·३॥ ]**

**उभाभ्यामपि**

इति । अपिशब्दादेकेनापि नात्र नियम । **द्वयोर्विवृतयोः परिशुद्धतरं दर्शनमित्युक्तं** भवति **नैकतरान्यथीभावादिति** । **उन्मीलितार्धनिमीलितयोरक्ष्णोरेकतरस्यान्यथीभावात्** । द्वयोरेकतरद्यद्यन्यथीभवति । यदि यदु-

1 Mss कश्मि०  2 2 B कार्यकारणार्थत्व
3 B. adds चक्षुः पश्यति विज्ञानं विजानातीति
4 To. following Tib यद्  5 To. following Tib. तस्मात्
6 B नाभिसरेत्

न्मीलितं तदर्धनिमीलितं क्रियेत[1] सर्वनिमीलितं वा । यच्चार्धनिमीलितं यदि तत्सर्वनिमीलितं क्रियेत[1] सर्वोन्मीलितं वा । तदा द्विचन्द्रदर्शनं न भवति । अतोऽवगम्यते द्वयोरपि चक्षुषोरत्र विज्ञानोत्पत्तौ व्यापारोऽस्तीति । **देशाप्रतिष्ठितत्वाद् रूपवदिति** । विपरीतदृष्टान्त । यथा रूपस्य देशप्रतिष्ठितत्वादाश्रयविच्छेदाद्विच्छेदो भवति नैवं विज्ञानस्य । न हि विज्ञानं देशप्रतिष्ठितम् । किं तर्हि । देशाप्रतिष्ठितममूर्तत्वात् । देशाप्रतिष्ठितत्वाच्च नाश्रयविच्छेदाद्विच्छेदो भवति ।

**तथाहि दूराद्रूपं पश्यतीति** । यत्र रूपं दृश्यते न तत्र तद्ग्राहकं चक्षुरिन्द्रियमस्ति । तत्र प्रमाणानुपलभ्यमानत्वात् । तत्राविद्यमानदेवदत्तादिवत् । यथा चक्षुरेवं श्रोत्रमपि वक्तव्यम् । इतर आह । स्वविषयदेशप्रापि[2] चक्षु श्रोत्रम । इन्द्रियत्वात् । घ्राणेन्द्रियादिवत् । अनेनानुमानेन तत्र प्रमाणानुपलभ्यमानत्वं हेतुमसिद्धं दर्शयति । आचार्य आह । **सति च प्राप्तविषयत्व इति** विस्तर । यदि प्राप्तविषयं चक्षु श्रोत्रं कल्प्येत **दिव्यं चक्षुःश्रोत्रमिह मनुष्येषु ध्यायिना नोपजायेत**[3] । यदि हि चक्षु श्रोत्रमतिविप्रकृष्टदेशस्थं व्यवहितं च कुड्यादिभिर्यथायोगं [4]रूपं शब्दं[4] गृह्णीयादेवमस्य दिव्यत्वं संभवेत् । तच्च प्राप्तविषयत्वे न स्यात् । **घ्राणादिवत्** । यथा घ्राणजिह्वाकाया प्राप्तविषयत्वाद्दिव्या ध्यायिनां नोपजायेरन् । तद्वत् । अनेन स्वविषयदेशप्रापित्वपक्षस्य धर्मिविशेषविपर्ययापत्त्वात्त्वं दर्शयति । संभवद्दिव्यत्वे हि चक्षु श्रोत्रे धर्मी । असंभवद्दिव्यत्वभावो विशेषविपर्यय[5] । स प्राप्नोतीति दोष । अनेन दोषेणानुमानत्वात् तत्प्रमाणानुपलभ्यमानत्वं सिद्धं व्यवस्थापयति । तस्मादप्राप्तविषयं चक्षु श्रोत्रम् ।

**यद्यप्राप्तविषयं चक्षुरिति** विस्तरः । आसन्ने नातिदूरस्थेन तिरस्कृतेन वा तुल्या तदप्राप्तिरिति तत्र दर्शनं प्रसञ्जयति । किमिदं परस्य साधनमुत दूषणमिति । यदि तावदेवं साधनम् । अतिदूरं तिरस्कृतं चक्षु श्रोत्रेण गृह्यते । अप्राप्तत्वात् । आसन्नविषयवदिति । तदसाधनम् । हेतो स्वयमनिश्चितत्वात् । पूर्वाभ्युपगमविरोधाद्वा[6] । अथ दूषणम् । सर्वाप्राप्तग्राहकत्वं चक्षुःश्रोत्रलक्षणस्य धर्मिण प्रसज्यते । तददूषणम् । अनुमानबाधनात् । कथमित्याह । **कथं तावदयस्कान्तो न सर्वमप्राप्तमयः [7]कर्षतीति** । प्रश्नमुखेनायस्कान्तनिदर्शनमुपन्यस्य सर्वाप्राप्ताग्राहकत्वं चक्षुःश्रोत्रस्य साधयति । न सर्वाप्राप्तग्राहकं चक्षु श्रोत्रम् । सर्वाप्राप्तग्रहणशक्तिहीनत्वात् ।

1 B क्रियते, To क्रियेत्
2 Mss & To प्राप्ति
3 To °जायेत्
4 4 B रूपशब्दम्
5 Mss omit विपर्यय:
6 B °विरोधाच्च
7 To कर्षयतीति

अयस्कान्तवत्। अयस्कान्तो [1]ह्यप्राप्तमयो गृह्णाति' कर्षतीत्यर्थ ' न च सर्वम-प्राप्तं गृह्णाति ' तद्वच्चक्षु श्रोत्रम्। प्राप्तविषयत्वेऽपि चैतत्समानमिति। नातिदूरतिरस्कृतो विषयश्चक्षु श्रोत्रेण गृह्यते' ग्रहणायोग्यत्वात्। संप्राप्ताञ्जन-शलाकावत्[2]। अथवा न सर्वस्वग्राह्यग्राहि चक्षु श्रोत्रम्'इन्द्रियस्वाभाव्यात्' घ्राणे-न्द्रियादिवत्। घ्राणादीना हि प्राप्तो विषयो न तु सर्वः' सहभूगन्धा-द्यग्रहणात्। घ्राणादिसहभूनि हि गन्धरसस्प्रष्टव्यानि घ्राणादिभिर्न गृह्यन्ते' शक्तिर्हीन्द्रियाणामीदृशीति। मनस्त्वरूपित्वादिति। प्राप्तत्वं मूर्तानामेव व्यवस्थाप्येत[3]' नामूर्तानामिति' [4]मनोऽप्राप्तविषयमिति न विचार क्रियते।

**त्रयमन्यथा**

इति। प्राप्तविषयमेव त्रयमिति ' इष्टावधारणार्थमारम्भ। अन्यथा हि प्राप्ताप्राप्तविषयमित्यपि संभाव्येत। निरुच्छ्वासस्य गन्धाग्रहणादिति। यदु-च्छ्वासेन सार्धं सूक्ष्मं भूतचतुष्कं घ्राणमागतं तस्य गन्धो घ्राणेन घ्रायते। वायौ गन्धान्तरमुत्पन्नमित्यपरे। मिश्रीभवेयुरेकदेशीभवेयुः। अथकदेशेन। किम्। स्पृशेयुरिति वर्तते। कथं शब्दाभिनिष्पत्तिरिति। यदि न स्पृशन्ति' अनभि-घाते शब्दाभिनिष्पत्तिर्न प्राप्नोतीत्यभिप्राय.। अत एवेति काश्मीरा। यदि हि स्पृशेयुर्हस्तो [5]हस्तेऽभ्याहतः सज्जेत' [6]जतुनीव जत्वन्तरम्। कथं [7]चितं प्रत्याहतं न विशीर्येत इति। अन्योन्यमस्पृशता परमाणूना [8]संघातः प्रत्याहत पाण्यादिभि• कथं न विशीर्यते। तदेवैषां निरन्तरत्वं यन्मध्ये नास्ति किंचि-दिति' आलोकादि मध्ये नास्तीति निरन्तरत्वमेषा व्यवस्थाप्यते। तदेव च प्राप्तत्वम्[9] नान्यथेति। अपि खल्विति' अपि चेत्यर्थ.। संघाताः सावयवत्वा-त्स्पृशन्तीत्यदोषः' योऽसो दोष उक्तो यदि सर्वात्मना स्पृशेयुर्मिश्रीभवेयु-र्द्रव्याणि' अथैकदेशेन सावयवा प्रसज्येरन्निति। कारण प्रतीति। यस्य यादृशं कारणं तस्य तत्कारणं स्पृष्टमस्पृष्टं वा प्रति[10]। आह' कदाचिदिति विस्तर.। स्पृष्टहेतुकमिति' स्पृष्टमन्योन्यं हेतुरस्य स्पृष्टहेतुकम्। एवमस्पृष्टहेतुकम्। यदा विशीर्येत इति। तद्यथा शुष्का मृच्चूर्णीक्रियमाणा। यदा चयं गच्छतीति[11]।

---

1 B ह्यप्राप्त०
2 To ०ञ्जनदशलाकावत
3 B ०स्थाप्यते
4 B मनः प्राप्त०
5 B हस्तेनाभ्याहतः
6 To जतुनेव
7 B सचितं
8 Mss & To संहात'
9 B प्राप्तित्वं
10 B & To add, इति
11 B. गच्छतीति

तद्यथा हिमम्' तद्धि पूर्वं सूक्ष्मं पश्चान्महद्भवति । **चयवतां चय इति** तद्यथ। मृत्पिण्डद्वयसंनिपाते । **उत्तरक्षणावस्थानं स्यादिति** ' उत्पद्य स्पृष्टियोगात् ।[1] **निरन्तरे तु स्पृष्टसंज्ञेति भदन्त.** ' भदन्तमतं चेष्टव्यमिति । वैभाषिकमतं कस्मान्नेष्टव्यम् । ननु वैभाषिकैरप्येवमुक्तम्' तदेवैषां निरन्तरत्वं यन्मध्ये नास्ति किंचिदिति । अस्त्येवम् । सावकाशं तु तद्वचनम् । यन्मध्ये नास्ति किंचिदिति ब्रुवाणा वैभाषिका मध्य आलोकादि नेच्छन्ति' अन्यपरमाणुप्रवेशानवकाशं तु न ब्रुवते । **अन्यथा हि सान्तराणां परमाणूना शून्येष्वन्तरेषु गतिः केन प्रतिबध्येत**' गतिमत इति वाक्यशेष । अयं चापरो दोष.। **न च परमाणुभ्योऽन्ये संघाता.**' यथा वैभाषिका. कल्पयन्ति । **त एव** [2]**ते संघाताः परमाणवः**[2] **स्पृश्यन्ते यथा रूप्यन्त इति**[3] । संघाता[4]एव नेक इत्यर्थः । **यदि च परमाणोरिति** विस्तर । परमाण्वपरिनिष्पत्तिं वक्तुकाम आचार्यो विचारयति । यदि परमाणोरेकस्य पूर्वादिदिग्भागभेद कल्प्येत **स्पृष्टस्यान्योन्यमस्पृष्टस्य वा सावयवत्वप्रसङ्ग** । **न चेत्** । किम् । दिग्भागभेद इति वर्तते । **स्पृष्टस्याप्यप्रसङ्ग.** । कस्य । सावयवत्वस्य । अल साधनम् । न निरवयव. परमाणुर्दिग्भागभेदवत्त्वात्' मापराशिवदिति । तदेतद्दिग्भागभेदवत्त्वं नेच्छन्ति वैभाषिका ' दिग्भागभेदो हि संघातरूपाणामेव कल्प्यते । एवं च वर्णयन्ति' धर्मतैवेयं यत्सप्रतिघाना भिन्नदेशत्वम्' तेषा नैरन्तर्येणावस्थानादभिन्नदेशत्वं मा भूदिति सान्तराणामपि सप्रतिघत्वेन गति प्रतिबध्यत इति ॥४३॥

**[त्रिभिर्घ्राणादिभिस्तुल्यविषयग्रहणं मतम् ।**
**चरमस्याश्रयोऽतीतः पञ्चानां सहजश्च तैः ॥४ ॥]**

आशुवृत्त्या च [5]**पर्वतादीनामलातचक्रादिवदिति** । आत्मपरिमाणतुल्यस्यैवार्थस्य ग्रहण इष्यमाणे कथं पर्वतादीना महता सकृदिव ग्रहणं लक्ष्यते ' न क्रमेणेत्याशङ्क्य युक्ति तथा ग्रहणे कथयति । आशुवृत्त्या चेत्यादि । यथालातचक्रादिग्रहणं क्रमेण वर्तमानं सकृदिव लक्ष्यते तथा पर्वतनदीशब्दादिग्रहणमाशुवृत्त्या भवतीति । **आहोस्वित्तुल्यातुल्यस्येति** । द्राक्षाफलादिदर्शने तुल्यस्य वालाग्रपर्वतादिदर्शनेऽतुल्यस्येत्यभिप्राय. । **उन्मिषितमात्रेणेति** न क्रमदर्शनन्यायेन । **एवं श्रोत्रेणेति** विस्तर. । **कदाचिदल्पीयास.** ' यदा **मशकशब्दं शृणोति** ।

---

1 B adds स्पर्शो नास्ति
2 2 B संघाते
3 Mss. omit इति
4 B सघात
5 B पर्वताना०

कदाचित्समा । यदा श्रोत्रपरमाणुसमप्रमाणं कस्यचिच्छब्दं शृणोति । कदाचिद्भूयांस । यदा मेघशब्दं शृणोतीति । अजाजीपुष्पवदवस्थिताः कालजीरकपुष्पवदवस्थिता । [1]एकतलावस्थिता इत्यर्थः । भूर्जाभ्यन्तरावस्थिता इति । कर्णाभ्यन्तरे यद्भूर्जपत्रवर्णाकारं तद्भूर्जमिवेति भूर्जम् । तदभ्यन्तरेऽवस्थिता श्रोत्रेन्द्रियपरमाणवः । घाटाभ्यन्तरे । घाटा नासापुटी । मालावदवस्थितानीति । मण्डलेन समपङ्क्त्यावस्थितानीति । बालाग्रमात्रं किलेति । आगमसूचनार्थं किलशब्द. । [2]अस्फुटमव्याप्तम् । स किलेति । कर्मसामर्थ्यादेवाविशरणं स्यादिति किलशब्देन अरुचिं सूचयति । संचिताश्रयालम्बनत्वादिति । संचिताश्रयत्वात्संचितालम्बनत्वाच्च ।

चरमस्याश्रयोऽतीतः

इत्यतीत एवेत्यवधारणम् । अत एवोच्यत इति । यस्मात् पञ्च विज्ञानकाया इन्द्रियद्वयाश्रया । चक्षुरादीन्द्रियाश्रया मनइन्द्रियाश्रयाश्च । तस्माच्चतुष्कोटिक[3] उत्तिष्ठते[4] । प्रथमा कोटिश्चक्षुरिति । चक्षुर्विज्ञानस्य चक्षुराश्रयभावेन न समनन्तरप्रत्ययभावेन । न हि चक्षुश्चित्तचैत्तस्वभावम् ।

चित्तचैत्ता अचरमा उत्पन्ना. समनन्तर[5]

इति च समनन्तरप्रत्ययलक्षणम् । द्वितीया कोटि. । समनन्तरातीतश्चैतसिको धर्मधातुः । तस्य समनन्तरभावेन [6]नाश्रयभावेन । षडेव ह्याश्रया विज्ञानस्येष्यन्ते चक्षुरादयो मनःपर्यन्ता नान्ये । तृतीया समनन्तरातीतं मनः । उभयलक्षणयुक्तत्वात् । चतुर्थी उक्तनिर्मुक्ता धर्मा । कोटित्रयमुक्ता विप्रयुक्ता असंस्कृतादय । एवं यावत्कायविज्ञानस्य स्वमिन्द्रियं वक्तव्यमिति । य. श्रोत्रविज्ञानस्याश्रयभावेन समनन्तरप्रत्ययभावेनापि स तस्येति [7]चतुःकोटिक. । प्रथमा कोटिः श्रोत्रम् । द्वितीया समनन्तरातीतश्चैतसिको धर्मधातु । तृतीया समनन्तरातीतं मन. । चतुर्थी कोटिरुक्तनिर्मुक्ता धर्मा इति । एवमन्यदपि वक्तव्यम् । मनोविज्ञानस्य पूर्वपादक इति । यो मनोविज्ञानस्याश्रयभावेन समनन्तरप्रत्ययभावेनापि स तस्येति पूर्वपादक. । यस्तावदाश्रयभावेन समनन्तरप्रत्ययभावेनापि स इति । मनस्तावदवश्यमसौ समनन्तरप्रत्यय. स्यात् । समनन्तर-

---

1 B एकतलता०
2 B, अस्फुत०
3 Mss. & B चतुष्कोटिकम्
4 B आतिष्ठते
5 Kārikā, II 63
6 To omits नाश्रयभावेन
7 B. चतुःकोटिकम्

प्रत्ययभावेन नाश्रयभावेन । समनन्तरातीतश्चैतमिको धर्मधातु । अचक्षुराद्या श्रयपटस्वभावत्वात् ॥४४॥

[तद्विकारविकारित्वादाश्रयश्चक्षुरादयः ।
अतोऽसाधारणत्वाच्च विज्ञानं तै निरुच्यते ॥४५॥ ]

**तद्विकारविकारित्वात्**

इति विस्तर । तेषा चक्षुरादीना विकारस्तद्विकारः । तद्विकारेण विकार तद्विकारविकार । स एषामस्तीति तद्विकारविकारीणि विज्ञानानि । तद्भाव तद्विकारविकारित्वम् । तस्माच्चक्षुरादय एवैषामाश्रया इत्यवधार्यते । **अनुग्रहोपघातपटुमन्दतानुविधानादिति** । चक्षुरादीनामञ्जनादिभिरनुग्रहं रेखादिभिश्चोपघातं चक्षुरादिविज्ञानान्यनुविदधते । ससुखोत्पादात्सदुःखोत्पादाच्च यथाक्रमम् । पटुमन्दता च तेषामनुविदधते । पटुमन्दतोत्पादात् । अतोऽवगम्यते । चक्षुरादिविकारेण विज्ञानविकारो भवतीति । ननु च पटुनि रूपे पटु चक्षुर्विज्ञानमुत्पद्यमानं दृश्यते । मन्दे मन्दमिति । [1]तेषा चक्षुरादीनाम् । यद्यपि रूपस्य पटुमन्दते चक्षुर्विज्ञानमनुविदधीत । विधुरावस्थयोस्तु चक्षूरूपयोश्चक्षुरवस्थामेव चक्षुर्विज्ञानमनुविधत्ते । न रूपावस्थाम् । तथा हि चक्षुष्यनुगृहीते रूपे चोपहते तद्वीतरागाणा मध्यस्थाना च चक्षुर्विज्ञानमविकारमुत्पद्यते । न तु सदु खमुत्पद्यते । रूपे पुनरनुगृहीतेऽपरित्यक्ते । चक्षुषि चोपहते कामलव्याधिना तिमिरोपघातेन वा । पीतदर्शनं भ्रान्तं केशोण्डुकादिदर्शनं वा प्रवर्तते । तथा पटुनि रूपे जरया मन्दे चक्षुषि मन्दं चक्षुर्विज्ञानमुत्पद्यते । एवं मन्दे रूपे चक्षुर्यद्यतिपटु भवेत्पटु चक्षुर्विज्ञानमुत्पद्यते । तथा हि जातिस्वभावेन पटुनि गृध्रचक्षुषि मन्देऽपि शवरूपेऽनेकयोजनविप्रकृष्टेऽपि चक्षुर्विज्ञानमुत्पद्यते । इत्येवं श्रोत्रादीन्यपि योज्यानि ।

**अतोऽसाधारणत्वाच्च**

इति । अत आश्रयभावात् ।असाधारणत्वाच्च । आश्रयभावो व्याख्यात इति न तं प्रत्याद्रियते । असाधारणत्वमेव तु व्याचक्षाण आह । **कथमसाधारणत्वमित्यादि** । **अन्यचक्षुर्विज्ञानस्यापीति** । अन्यसन्तानविज्ञानस्यापीत्यर्थ । **तैरेव निर्दिश्यत** इति चक्षुरादिभि । चक्षुर्विज्ञानं यावन्मनोविज्ञानम् । **न रूपादिभिः** । रूपविज्ञानं यावद्धर्मविज्ञानम् । **यथा भेरीशब्दो यवाङ्कुर** इति ।

1 B omits तेषा चक्षुरादीनाम्

असाधारणत्वात्ताभ्या भेरीयवाभ्याम् । यथा निर्देशो लोके भेरीशब्दो यवाङ्कुर इति । न तु दण्डशब्दः क्षेत्राङ्कुर इति वा। दण्डो [1]हि पटहादिशब्दस्यापि कारणीभवेत् । क्षेत्र च शालिगोधूमाङ्कुरस्यापि । इति साधारणत्वान्न ताभ्या निर्देश क्रियते। असाधारणाभ्या तु भेरीयवाभ्या निर्देशः। तद्वदिहापि द्रष्टव्यम्। अपि खलु चक्षुरिव विज्ञानम् । उभयो सत्त्वसंख्यातत्वात् । रूपं त्वसत्त्वसंख्यातमपि। चक्षुषा विज्ञानम् चक्षुर्विज्ञानम्। तस्य [2]कारणभावात्। [3]चक्षुषे विज्ञानं चक्षुर्विज्ञानम् । सुखदु खवेदनासप्रयुक्तस्य विज्ञानस्य चक्षुरनुग्रहोपघातप्रवृत्तत्वात्। चक्षुपो विज्ञानं चक्षुर्विज्ञानम् । असाधारणत्वेन तत प्रवृत्ते । चक्षुषो विज्ञानं चक्षुर्विज्ञानम् । सत्त्वसंख्यातस्यैव स्वामिभावात्। चक्षुषि विज्ञानं चक्षुर्विज्ञानम्। तत्संप्रयोगिन्या सुखाया दु खाया वा वेदनाया [4] चक्षुष्येव परिच्छिद्यमानत्वात्। एवं श्रोत्रादिषु योज्यम्। तदेवं चक्षुरादिभिरेव विज्ञाननिर्देशो युज्यते । न रूपादिभि । एव तृतीयचतुर्थध्यानभूमिकेन चक्षुपा तद्भूमिकाधरभूमिकानि रूपाणि पश्यतो योजयितव्यमिति। तस्यैव कामधातूपपन्नस्य योजयितव्यम्। एवं तृतीयादिध्यानचक्षुपा योज्यमिति। तस्यैव प्रथमध्यानोपपन्नस्य तृतीयचतुर्थध्यानचक्षुपा पश्यतो योज्यम् ॥४५॥

**[ न कायस्याधरं चक्षुरूर्ध्वं रूप न चक्षुषः।**
**विज्ञानं चास्य रूपं तु कायस्योभे च सर्वत ॥४६॥ ]**

**न कायस्याधर चक्षु**

इति। अधरभूमिकमित्यर्थ । स्वभूमिकमूर्ध्वभूमिकं चाभ्यनुज्ञातं भवति। **पञ्चभूमिकानि हि कायचक्षूरूपाणि**[5]। काय शरीरम्। एतानि कायादीनि पञ्चभूमिकानि। **कामावचराणि** प्रथमध्यानभूमिकानि **यावच्चतुर्थध्यानभूमिकानि**। आरूप्यधातावभावात्। **द्विभूमिकं चक्षुर्विज्ञानमिति**। **कामावचरं प्रथमध्यानभूमिकं च**। तयोर्वितर्कविचारसद्भावात्। चक्षुर्विज्ञानस्य चावश्यं सवितर्कविचारत्वात्।

**[6]ऊर्ध्वं रूपं न चक्षुषः**

इति। नोर्ध्वभूमिकं रूपं चक्षुषो विषयो भवति। ऊर्ध्वभूमिकस्य रूपस्य सूक्ष्मत्वात्। स्वभूमिकमधरभूमिकं चाभ्यनुज्ञातं भवति।

---

1 B ऽपि
2 B कारण॰
3 B चक्षुषो
4 Mss वेदनाश्च चक्षु॰
5 B adds इति
6 B & To ऊर्ध्वंरूपं

विज्ञानं च

किम्। ऊर्ध्वं न चक्षुष इति प्रकृतम्। कामावचरस्य चक्षुषोऽधरभूमिकस्य प्रथमध्यानभूमिकं चक्षुर्विज्ञानं न भवति। स्वभूमिकमधरभूमिकं वाभ्यनुज्ञातं भवति। कामावचरस्य चक्षुषः स्वभूमिकं कामावचरमेव चक्षुर्विज्ञानं भवति। प्रथमध्यानभूमिकस्य चक्षुषः प्रथमध्यानभूमिकमेव चक्षुर्विज्ञानं भवति। कामावचरं तु चक्षुर्विज्ञानमस्य न भवति। ननु चोक्तमधरभूमिकमभ्यनुज्ञातमिति। सत्यमुक्तमेतत्। किन्तु असत्यात्मीयेऽधरभूमिकमिष्यते। न सतीति। द्वितीयतृतीयचतुर्थध्यानचक्षुषो ह्यसति आत्मीये प्रथमध्यानभूमिकमेवाधरं चक्षुर्विज्ञानं भवति। न तु कामावचरम्। परमनिहीनत्वात्। संभवतस्त्वेवमुक्तमधरभूमिकमभ्यनुज्ञातमिति। **अस्येत्यनन्तरोक्तस्य चक्षुर्विज्ञानस्येति** चक्षुर्विज्ञानजाते। **रूपं सर्वतो विषयः**। संभवतस्तु योज्यम्। कामावचरस्य चक्षुर्विज्ञानस्य स्वभूमिकमेव रूपम्। प्रथमध्यानभूमिकस्य तु [1]प्रथमध्यानभूमिकचक्षुराश्रयस्य[1] चक्षुर्विज्ञानस्य स्वभूमिकमधरभूमिकमूर्ध्वभूमिकं[2] च रूपं विषयः। चतुर्थध्यानभूमिकचक्षुराश्रयस्य तु चतुर्थध्यानभूमिकं रूपं ततश्चाधरभूमिकं सर्वं विषयः। एवं यावद्द्वितीयध्यानभूमिकचक्षुराश्रयस्य द्वितीयध्यानभूमिकम्। ततश्चाधरभूमिकं रूपं विषयः। एवं चक्षुर्विज्ञानजातेरूर्ध्वमधः स्वभूमौ च रूपं विषयो भवति। **कायस्य चोभे रूपविज्ञाने सर्वतो भवत** इति। कामावचरस्य कायस्य शरीरस्य स्वभूमिकोर्ध्वभूमिके रूपविज्ञाने भवतः। प्रथमध्यानभूमिकस्य कायस्य प्रथमध्यानभूमिकमेव विज्ञानम्। रूपं तु स्वोर्ध्वाधरभूमिकम्। यथा [3]स्वाश्रयं चक्षुः। द्वितीयादिध्यानभूमिकस्य कायस्य विज्ञानमधरभूमिकमेव। प्रथमध्यानभूमिकमेवेत्यर्थः। रूपं तु द्वितीयतृतीयध्यानभूमिकस्य कायस्य स्वोर्ध्वाधरभूमिकम्। यथा स्वाश्रयं चक्षुः। चतुर्थध्यानभूमिकस्य कायस्य रूपं स्वाधरभूमिकम्। तत ऊर्ध्वं रूपाभावात् ॥४६॥

**[ तथा श्रोत्रं त्रयाणां तु सर्वमेव स्वभूमिकम्।**
**कायविज्ञानमधरस्वभूम्यनियतं मनः ॥४७॥ ]**

**तथा श्रोत्रम्**

इति। यथा चक्षुरुक्तं तथा श्रोत्रं व्याख्यातव्यम्। कथमिति। अथ[4]

---

1 1 Mss omit this portion  2 A, B, To & V drop ऊर्ध्वभूमिक
3 Mss स्वाश्रय  4 B & To चाह

यत्र काये स्थित श्रोत्रेण शब्दान् शृणोति किं तानि कायश्रोत्रशब्द-विज्ञानान्येकभूमिकान्येव भवन्ति' आहोस्विदन्यभूमिकान्यपि । आह' सर्वेषा भेद. । कामधातूपपन्नस्य स्वेन श्रोत्रेण स्वान् शब्दान् शृण्वत मर्व स्वभूमिकं भवतीति [1]विस्तरेणानया दिशा[1] ग्रन्थो वक्तव्यो यावदयं तु नियम ।

न कायस्याधरं श्रोत्रमूर्ध्व शब्दो न च श्रुते ।
विज्ञानं वारय शब्दस्तु कायस्योभे च सर्वत ॥

इति विस्तरेण योज्यम् । कथमिति । न कायस्याधरं श्रोत्रम् । पञ्चभूमिका हि कायश्रोत्रशब्दा' कामावचरा यावच्चतुर्थध्यानभूमिका । द्विभूमिकं श्रोत्र-विज्ञानम्' कामावचरं प्रथमध्यानभूमिकं च । तत्र यद्भूमिक कायस्तद्भूमिकमूर्ध्व-भूमिकं वा श्रोत्रं भवति' न त्वधरभूमिकम् । यद्भूमिकं श्रोत्रं तद्भूमिकोऽधरभूमिको वास्य शब्दो विषयो भवति' ऊर्ध्वं शब्दो न च श्रुतेः । न हि[2] कदाचिदूर्ध्वभूमिकः शब्दोऽधरभूमिकेन श्रोत्रेण श्रोतुं शक्यते । विज्ञानं च' ऊर्ध्वं न श्रोत्रस्य शब्दवत् । अस्य शब्दस्तु कायस्योभे च सर्वत. अस्येत्यनन्तरोक्तस्य श्रोत्रविज्ञानस्य शब्द 'सर्वतो विषयः' ऊर्ध्वमध. स्वभूमौ च । कायस्य चोभे शब्दविज्ञाने सर्वतो भवत इति ।

अनियतं मनः

इति । यथा चक्षु. श्रोत्रं [3]वा नियमितम्' न कायस्याधरं चक्षु' श्रोत्रं [4]वेत्येवमादिना नैवं नियमितं मन. । अत एवाह' **पञ्चभूमिकेऽपि काये सर्वभूमिकानि मनआदीनि भवन्तीति** । मनोधर्ममनोविज्ञानानि सर्वभूमिकानि कामावचराणि यावद्भवाग्रिकाणि । तद्यथा कामधातूपपन्नो यदि कामावचरान्म-नसोऽनन्तरं कामावचरमेव कामावचरधर्मालम्बनं मनोविज्ञानमुत्पादयति सर्वाणि कामावचराणि । यदि प्रथमध्यानभूमिकाद्यावद्भवाग्रभूमिकादुपपत्तिकाले समा-पत्तिकाले वा संभवतः कामावचरं तथैव मनोविज्ञानमुत्पादयति' मनस्तत्रस्थम्' शेषाणि कामावचराणि । अथ तत्रैव तद्विज्ञानमुत्पादयति धर्मास्त्वालम्बनं प्रथमध्यानभूमिका यावद्भवाग्रभूमिका.' धर्मास्ततस्त्याः' शेषाणि पूर्ववत् । एवं प्रथमध्यानोपपन्नो यावद्भवाग्रोपपन्नो यथायोगं वक्तव्यः ।

---

1 1 B विस्तरेणानेनादिना    2 Mss. ति
3 B. च    4 B. चेत्येव०

समाप्त आनुषङ्गिक प्रसङ्ग इति ।

चक्षुश्च धर्मधातोश्च प्रदेशा दृष्टि [1]

इत्येतदाधिकारिकम्[2] । [3]अथ यत्र काये स्थितश्चक्षुषा रूपाणि पश्यतीत्येवमादिरयमानुषङ्गिक. प्रसङ्ग । दर्शनसबन्धादागतत्वात् ॥४७॥

**[ पञ्च बाह्या द्विविज्ञेया नित्या धर्मा असंस्कृताः ।**
**[4]धर्मार्ध इन्द्रियं ये च द्वादशाध्यात्मिकाः स्मृताः ॥४८॥]**

पञ्च बाह्या द्विविज्ञेया.

इति । पञ्चग्रहणं धर्मधातुनिराकरणार्थम् । बाह्यग्रहणं चक्षुरादिनिरासार्थम् । बाह्या एव पञ्च द्विविज्ञेया इत्यवधारणादन्ये **त्रयोदश धातव एकविज्ञानविज्ञेया** इति सिद्धम् । **पञ्चविज्ञानकायानामविषयत्वात् ।**

नित्या **धर्मा असंस्कृता.**

इति । असंस्कृता एव नित्या इत्यवधारणम् । अध्वसंचाराभावान्नित्याः ।

[5]धर्मार्ध इन्द्रिय[5] ये च द्वादशाध्यात्मिका. स्मृताः

इति । धातव इत्यधिकार । [6]**द्वाविंशतीन्द्रियाण्युक्तानि । सूत्र** इति । अथ जातिश्रोणो ब्राह्मणो येन भगवास्तेनोपसंक्रान्त । उपसंक्रम्य भगवता सार्धं संमुखं संमदनी संरञ्जनी विविधा कथा व्यतिसार्येकान्ते न्यषीदत् । एकान्तनिषण्णो जातिश्रोणो ब्राह्मणो भगवन्तमिदमवोचत् । इन्द्रियाणीन्द्रियाणीति भो गौतम उच्यन्ते । कति भो गौतम इन्द्रियाणि । कियता चेन्द्रियाणा संग्रहो भवति । द्वाविशतिरिमानि ब्राह्मण इन्द्रियाणि । कतमानि द्वाविशति. । **चक्षुरिन्द्रियं श्रोत्रेन्द्रियं घ्राणेन्द्रियं जिह्वेन्द्रियं कायेन्द्रिय मनइन्द्रियं स्त्रीन्द्रियं पुरुषेन्द्रियं जीवितेन्द्रिय[7] सुखेन्द्रियं दुःखेन्द्रियं सौमनस्येन्द्रिय दौर्मनस्येन्द्रियमुपेक्षेन्द्रियं श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं प्रज्ञेन्द्रियमनाज्ञातमाज्ञास्यामीन्द्रियमाज्ञेन्द्रियमाज्ञातावीन्द्रियम् ।** इतीमानि ब्राह्मण द्वाविशतिरिन्द्रियाणि । इयता इन्द्रियाणामिन्द्रियसंग्रहो भवति । अथ जातिश्रोणो ब्राह्मणो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतोऽन्तिकात् प्रक्रान्त इति । धर्मार्ध इति धर्मधात्वेकदेश इत्यर्थ. । धर्मार्धमिति नपुंसकनिर्देशेन केचित् पठन्ति । तेषा पाठे अर्धधर्म इति समप्रविभाग. प्राप्नोति । [8]अर्ध नपुंसकमिति

1 Kārikā, I 41 2 B. ०क: 3 B, अथवा

4 Yaśomitra prefers धर्मार्धः, but Poussin's fragmentary edition of the *Kārikā* (Paris 1931) reads धर्मार्धम्. 5 5 Mss धर्मार्धमिन्द्रिय

6 B द्वाविंशतिरिन्द्रियाणि 7 Mss. drop जीवितेन्द्रियं. 8 Pā., II. 2 2

लक्षणात् । अर्धपिप्पलीति यथा । अथ नपुंसकलिङ्गोऽप्यर्धशब्द एकदेशार्थे वर्तते । तदैवं समासः क्रियते । धर्मश्चासावर्धं च धर्मार्धम् । धर्मं वार्धं धर्मार्धमिति । **आभिधर्मिकास्तु षडायतनव्यवस्थामनादृत्येति ।** चक्षुरायतनं यावत्कायायतनं मनआयतनमिति षडायतनमिति षडायतनव्यवस्था युक्तरूपामनादृत्य । **जीवितेन्द्रियानन्तरं मनइन्द्रियं पठन्ति । सालम्बनत्वात् ।** वेदनेन्द्रियादीनि हि सालम्बनानि [1]अनन्तरं पठन्ति । **जीवितेन्द्रियादीन्येकादशेति ।** जीवितेन्द्रियम् । वेदनेन्द्रियाणि पञ्च । श्रद्धादीनि चेति[2] । **त्रयाणां च भाग इति ।** आज्ञास्यामीन्द्रियादीनां नवद्रव्यात्मकानां मनइन्द्रियं मुक्त्वान्यान्यष्टौ द्रव्याणि **धर्मधात्वेकदेशः । चक्षुरादयः पञ्च स्वनामोक्ता इति ।** पञ्च चक्षुरादयो धातवः पञ्चेन्द्रियाणि । चक्षुरिन्द्रियं यावत्कायेन्द्रियम् । **स्त्रीपुरुषेन्द्रिये च कायेन्द्रियैकदेश एवेति** पञ्च चक्षुरादिधातवः सप्तेन्द्रियाणि भवन्ति । **सप्त चित्तधातवो मनइन्द्रियमिति ।** एवं द्वादशाध्यात्मिका धातवोऽष्टाविन्द्रियाणि भवन्तीति । द्वादशाध्यात्मिका धातव एव धर्मार्धं एव चेन्द्रियमित्यवधारणात् **पञ्च धातवो रूपादयः । तदन्यधर्मधातुप्रदेशो[3] नेन्द्रियमिति** सिद्धम् ॥४८॥

आचार्ययशोमित्रकृतौ स्फुटार्थायामभिधर्मकोशव्याख्यायां
धातुनिर्देशो नाम प्रथमं कोशस्थानम् ॥१॥

---

1 B. तदनन्तरं 2 B. चेन्द्रियाणि पञ्चेति
3 B. ०प्रदेशश्च.

# अभिधर्मकोशव्याख्यायाम्

## द्वितीयं कोशस्थानम्

[चतुर्ष्वर्थेषु पञ्चानामाधिपत्यं द्वयोः किल ।
चतुर्णां पञ्चकाष्टानां संक्लेशव्यवदानयोः ॥१॥]

उक्तानीन्द्रियाणीति। प्रथमस्य द्वितीयस्य च कोशस्थानस्य सम्बन्धोपनिपातता दर्शयन्नाह । उक्तानीन्द्रियाणीति । प्रथमकोशस्थानावसाने यस्मात्

धर्मार्ध[1] इन्द्रियम्

इत्युक्तं तस्मादिदमायातमिति सम्बन्ध । कः पुनरिन्द्रियार्थ इति । वैयाकरणैरन्यथा इन्द्रियशब्दार्थव्युत्पत्तिः कृतेत्यत प्रश्नयति कः पुनरिन्द्रियार्थ इति । [2]इदि परमैश्वर्य इति पठ्यते । तस्य धातोरिन्दन्तीतीन्द्रियाणीति रूपं द्रष्टव्यम् । कथं कृत्वा इन्दन्तीति इन्द्राणि रप्रत्यय औणादिक । इन्द्राण्येवेन्द्रियाणीति स्वार्थे घस्तद्धित । अथवा इन्दतीतीन्द्रियम् बहुत्वात्तु बहुवचनेन कृतो निर्देश इन्दन्तीतीन्द्रियाणीति तस्मात् [3]इन्दतीत्यस्य शब्दस्य इन्द्रियमित्यादेश । कथम् अवर्णस्य रभाव तिशब्दस्य चेयादेश तेन नैरुक्तेन विधानेनेन्द्रियमिति भवति । तद् यथा कुञ्जर इति । वैयाकरणैर्हि कुञ्जोऽस्यास्तीति कुञ्जर इति मत्वर्थीयेन कुञ्जरशब्दो व्युत्पाद्यते । नैरुक्तैस्तु तदनादृत्य कुञ्जर कुञ्जचारित्वादिति नैरुक्तेन न्यायेन साध्यते । तद्वदिहापि द्रष्टव्यम् । यदि वैयाकरणनयेन[4] इन्द्रस्य लिङ्गमिन्द्रियमिति व्युत्पाद्येत आधिपत्यार्थ इन्द्रियार्थो हीयेत आधिपत्यार्थश्चेष्यते तस्मादित्थमिन्द्रियशब्दस्य व्युत्पत्तिर्नैष्टव्येति । दृष्ट्वा श्रुत्वा च विषमपरिवर्जनादिति । दृष्ट्वा श्वभ्रादि श्रुत्वा च व्याघ्रादिरुतं श्वभ्रादिव्याघ्रादिरुतविषमपरिवर्जनात् । ससंप्रयोगयोरिति सचैतसिकयो । रूपदर्शनशब्दश्रवणयोश्चेति । चक्षुः पश्यति श्रोत्रं शृणोतीत्यादि वैभाषिकाणां सिद्धान्तः । [5]तेनालोचनविशेषलक्षणयोर्दर्शनश्रवणयोरसाधारण-

---

1 B & To धर्मार्थ, but see Kārikā, I 47 2 Dhā , I 64
3 B & To इन्द्रन्ति०  4 See Pā , V, 2,93
5 B & To following Tib तेनालम्बन०

कारणत्वे चक्षुःश्रोत्रयोराधिपत्यम्। आत्मभावशोभाया पूर्ववदिति। अघ्राणादीनां सत्त्वानामकान्तरूपत्वादकान्तात्मभावत्वादित्यर्थः। तैः कवडीकाराहारपरिभोगादिति। तैर्घ्राणादिभिस्तत्परिभोगादिति। कथं गन्धस्य कवडीकाराहारत्वम्। [1]नासिकया गन्धग्रासव्यवच्छेदेन कवडीकरणात्। कथं स्प्रष्टव्यस्य कवडीकाराहारत्वम्। कायेन स्नानाभ्यङ्गादिकस्प्रष्टव्यस्य रोमकूपमुखग्रासव्यवच्छेदेन कवडीकरणात्।

द्वयोः किल

इति। किलशब्दः परमतद्योतने। स्वमतमस्य पश्चाद् वक्ष्यते। द्वयोरिति प्रत्येकमभिसम्बन्धः। सत्त्वभेदः स्त्रीपुरुष इति। स्त्रीत्येको निकायसभागः पुरुष इत्यपरस्तयोर्भेदः। सत्त्वविकल्प इति स्तनादेः संस्थानस्य स्वरस्याचारस्य चान्यथात्वं विशेष इत्यर्थः। संक्लेशव्यवदानयोरित्यपर इति पूर्वाचार्यः। न सत्त्वभेदविकल्पयोरन्तरेणापि पुरुषेन्द्रियं रूपावचराणां विकल्पसिद्धेः। विकल्पकृतश्च सत्त्वभेद इत्यभिप्रायः। तद्वियुक्तविकलानामिति। वियुक्ताश्च ते विकलाश्च वियुक्तविकलाः। ताभ्यां स्त्रीपुरुषेन्द्रियाभ्यां वियुक्तविकलास्तद्वियुक्तविकलाः। के। [2]शण्ढपण्डकोभयव्यञ्जनाः। तद्वियुक्ताः शण्ढपण्डकाः। तेषां स्त्रीपुरुषेन्द्रियाभावात्। शण्ढपण्डकानां पुनः कः प्रतिविशेषः। शण्ढकाः स्वभावतो निःस्त्रीपुरुषेन्द्रियाः। पण्डका उपक्रमेणोपहतेन्द्रियाः। विनये तु पण्डका एव पञ्च पठ्यन्ते। प्रकृतिपण्डक ईर्ष्यापण्डकः पक्षपण्डक आसेकपण्डको लूनपण्डकश्चेति। तत्र प्रकृतिपण्डकः शण्ढ इहाभिप्रेतः। यस्य हि प्रकृत्या व्यञ्जनं नास्ति स प्रकृतिपण्डकः। शेषा इह पण्डका इष्यन्ते। लूनपण्डको हि तावदिन्द्रियच्छेदादिन्द्रियविकल इति स्फुट एषः। पक्षपण्डकादयस्त्विन्द्रियाकर्मण्यत्वेन तद्विकला एव। इन्द्रियकर्मण्यत्वकालेऽपि तद्विकला इति व्यवस्थाप्यन्त एव। तदिन्द्रियकर्मण्यत्वस्य पुरुषसुखविशेषाजनकत्वात् प्रव्राजनकत्वाच्च। इन्द्रियसद्भावाशङ्कानिवृत्त्यर्थमेव चेह शण्ढपण्डका इति पृथक् पाठः। अन्यथा हि विनयवदिहाप्यभिधर्मे पण्डका इत्येवं[3] पठ्येरन्। उभयव्यञ्जनास्तद्विकलाः स्थानभ्रंशवैकल्यादल्पसुखहेतुत्ववैकल्याच्च। अपरे

---

1 B & To नासिकयोः 2 B & To षण्ढ for शण्ढ throughout
3 B & To following Tib इत्येव

व्याचक्षते। तद्वियुक्ता शण्ढाः। तद्विकला पण्डकाः उपक्रमवैकल्यात्। उभयव्यञ्जनाश्च तद्विकलाः स्थानश्च शवैकल्यादल्पसुखहेतुत्ववैकल्याच्चेति। तेषाम**संवरादीनि न भवन्ति।**

नृणामसंवरो हित्वा शण्ढपण्डद्विधाकृतीन्[1]।
आनन्तर्यं शण्ठादीनां तु नेष्यते
अल्पोपकारालज्जित्वात्[2]।
छिनत्ति स्त्रीपुमान् दृष्टिचरित [3]

इति वचनात्। **स्त्रीपुरुषाणां तु तानि भवन्ति।** अत संक्लेशे आधिपत्य स्त्रीपुरुषेन्द्रिययो। **सवरफलप्राप्तिर्वैराग्याणि** चेति। संवरस्त्रिविध प्रातिमोक्षसंवरो ध्यानसंवरोऽनास्रवसंवरश्च। तेषामेकोऽपि संवरो न भवति किमङ्ग सर्वे।

संवरोऽप्येवम्[4]

इति वचनात्। अतएव न स्रोतआपत्त्यादिफलप्राप्ति। कामादिवैराग्यञ्च तेषां न सम्भवति। स्त्रीपुरुषाणां तु भवतीति। अतो व्यवदानेऽपि स्त्रीपुरुषेन्द्रिययोराधिपत्यमिति। **निकायसभागसम्बन्धसन्धारणयोरिति।** जीवितेन्द्रियस्य निकायसभागोत्पत्तौ निकायसभागसम्बन्धे तस्याधिपत्य व्यवस्थाप्यते। निकायसभागसन्धारणे चाधिपत्यं। जीवितेन्द्रियवशेन तदूर्ध्वमवस्थानात्। **मनइन्द्रियस्य पुनर्भवसम्बन्ध इति।** क्लिष्टेन पुनर्भवसम्बन्धात्। जीवितेन्द्रियादस्य को विशेष। जीवितेन्द्रियस्य अन्तराभव एव सम्बन्धनं मनइन्द्रियस्य तूपपत्तिभवेऽपि। समानकालञ्च जीवितेन्द्रिय निकायसभागेन तत्सम्बन्धनं करोति। मनइन्द्रियं तु भिन्नकालमपि पुनर्भवे तत्सम्बन्धनं करोति। **वशिभावानुवर्तन[5] इति।** चित्तस्य वशिभावमनुवर्तते लोको धर्मो वा यथोक्तम्। चित्तेनाय लोको नीयत इति विस्तरः। **गाथायामप्युक्तम्**

चित्तेन नीयते लोकश्चित्तेन [6]परिकृष्यते।
एकधर्मस्य चित्तस्य सर्वधर्मा वशानुगाः॥[7]

---

1 Kārikā, IV 44 2 Kārikā, IV 98 To अल्पोपकार्यलज्जि०
3 Kārikā, IV 81 4 Kārikā, IV 41
5 B ०नुवर्तन 6 Mss परिहृष्यते
7 See Samyutta N., I, 7, Addhavagga, 2

इति । **रागादीनां तदनुशायित्वादिति** । तेषु सुखादिष्वनुशायितुं शीलमेषामालम्बनतः संप्रयोगतो वा । त इमे तदनुशायिनो रागादयः । तद्भावस्तदनुशायित्वम् । तस्मादिति । यथोक्तं सुखायां वेदनायां रागोऽनुशेते । दुःखायां द्वेषः अदुःखासुखायां मोह इति । **तैर्हि व्यवदायत इति** । तैर्विशुध्यतीत्यर्थः । तदेवं क्लेशविशुद्धावेषां श्रद्धादीनामाधिपत्यमुक्तं भवति । **व्यवदानेऽपि सुखादीनामाधिपत्यमित्यपर इति** । न केवलं संक्लेशे सुखादीनामाधिपत्यम् । किं तर्हि । व्यवदानेऽपीत्यपिशब्दस्यार्थः । आभिधार्मिकाः केचिदेवमाहुः । व्यवदानेऽपि तेषामाधिपत्यमस्तीत्यागममानयन्ति । **यस्मात् सुखितस्य चित्तं समाधीयत इत्युक्तं सूत्रे । दुःखोपनिषच्छ्रद्धा ।** दुःखमुपनिषदस्याः । सेयं श्रद्धा दुःखोपनिषद् दुःखहेतुकेत्यर्थः । दुःखे सति कस्यचिद्धर्मे रत्नत्रये वा श्रद्धा जायते प्रव्रज्यां [1]वाभिलषति । **षण्णैष्क्रम्याश्रिता सौमनस्यादय इति** । षण्णैष्क्रम्याश्रितानि सौमनस्यानि षण्णैष्क्रम्याश्रितानि दौर्मनस्यानि षण्णैष्क्रम्याश्रिता उपेक्षाः । नैष्क्रम्यं सास्रवोऽनास्रवो मार्गः । धातोः संसाराद्वा निष्क्रमणं वैराग्यमित्यपरे । यथोक्तं सूत्रे चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यते सौमनस्यं नैष्क्रम्याश्रितं नैष्क्रम्यालम्बनमित्यर्थः । नैष्क्रम्यानुकूलमिति वा । एवं यावन्मनः प्रतीत्य धर्मांश्चोत्पद्यते सौमनस्यं नैष्क्रम्याश्रितमिति । तथा चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यते दौर्मनस्यं नैष्क्रम्याश्रितम् । एवं यावन्मनः । तथा चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यत उपेक्षा नैष्क्रम्याश्रिता । एवं यावन्मनः । नैष्क्रम्यं प्राप्स्यामीति कस्यचित् सौमनस्यम् । न नैष्क्रम्याय मया यत्नः क्रियत इति कस्यचिद्दौर्मनस्यम् । कस्यचित् प्रतिसंख्यायोपेक्षा तेषु रूपादिषु भवति ।

**अपरे पुनराहुरिति** सौत्रान्तिकाः । **विज्ञाय विषमपरिहारादिति** । विज्ञानेन विषमपरिहारः क्रियते न चक्षुःश्रोत्रेणेत्यभिप्रायः । **नापि विज्ञानादन्यद्रूपदर्शनं शब्दश्रवणं वास्तीति** । न रूपदर्शनं ग्रहणव्यतिरिक्तं विचार्यमाणं लभ्यते । ग्रहणं च विज्ञानमेवेति नान्यद्भवति । तस्माच्चक्षुःश्रोत्रविज्ञानयोः ससंप्रयोगयोरुत्पत्तौ यदाधिपत्यमुक्तं तदेव तद्भवति । नान्यत्राधिपत्यमेतदित्यभिप्रायः ॥१॥

---

1 Mss चाभिलषति

[ स्वसर्वार्थोपलब्धौ त्वाधिपत्यादिन्द्रियाणि षट् ।
स्त्रीत्वे पुंस्त्वे चाधिपत्यात् कायात् स्त्रीपुरुषेन्द्रिये ॥२॥
निकायस्थितिसंक्लेशव्यवदानाधिपत्यतः ।
जीवित वित्तिश्रद्धादि पञ्चकेन्द्रियता मताः ॥३॥
निर्वाणाद्युत्तरोत्तरप्रतिलम्भाधिपत्यतः ।
अनाज्ञातमाज्ञास्याम्याज्ञाज्ञातावीन्द्रियाणि च ॥४॥ ]

मनस पुनः सर्वार्थोपलब्धाविति[1] ।

स्वार्थोपलब्ध्याधिपत्याद्

इत्येव सिद्धे मनसः सर्वार्थोपलब्धाविति वचन धर्मधातोरसर्वधर्मस्वभावत्वात् । व्याख्यातञ्चैतत् पुरस्तात् । ननु चार्थानामप्यत्राधिपत्यमिति । द्वयं प्रतीत्य विज्ञानस्योत्पत्तिरिति वचनात् । अधिकं हि प्रभुत्वमाधिपत्यमिति । अधिक प्रभुरधिपतिस्तद्भाव आधिपत्यमिति । सर्वरूपोपलब्धौ सामान्यकारणत्वादिति । नीलपीतादिसर्वरूपोपलब्धौ [2]एकरूपस्य चक्षुष [3]कारणत्वात् । न तु[4] रूपस्यैकरूपस्य नीलपीतादिसर्वरूपोपलब्धौ कारणत्वम् । न हि नीलरूपं पीतरूपोपलब्धौ कारणं भवति । तत् पटुमन्दताद्यनुविधानाच्चोपलब्धेरिति । यस्मादुपलब्धिश्चक्षुरादिपटुमन्दतामनुविधत्ते । तद्यथा पटुनि चक्षुषि पट्वी तदुपलब्धिः । मन्दे मन्देति । आदिशब्देन अकुशलकुशलसवेदनावेदनानुविधानम् । अकुशले मनसि अकुशलोपलब्धि । कुशले कुशला । सवेदने सवेदना । अवेदने [5]चावेदनेति । न रूपस्य पटुमन्दताद्यनुविधत्ते उपलब्धि । तेनाह । तद्विपर्ययादिति । तस्माच्चक्षुरादीनामधिकमैश्वर्यं न रूपादीनाम् ।

कायात् स्त्रीपुरुषेन्द्रिये

इति । अत्र साधनम् । कायेन्द्रियस्वभाव स्त्रीपुरुषेन्द्रियम् । स्प्रष्टव्यविज्ञानजनकत्वात् । अस्त्रीपुरुषेन्द्रियस्वभावकायेन्द्रियवत् । वैधर्म्येण चक्षुरिन्द्रियवत् । स्त्र्याकृतिस्वरचेष्टाभिप्राया इति । [6]स्त्र्यभिप्राय पुरुषाभिप्रायो[6] विपर्ययेण । तदेवं सति सत्त्वविकल्प एव स्त्रीपुरुषेन्द्रिययोराधिपत्यम् ।

निकायसभागस्थितौ जीवितेन्द्रियस्याधिपत्यम् । न तु वैभाषिकवत् निकायसभागसम्बन्धे तत्र मनस एवाधिपत्यात् । संक्लेशे वेदनानामिति । अत्र

---

1 Mss ०पलब्धाविति
2 V एव रूपस्य
3 To करणत्वात
4 Mss ननु
5 B & To omit च
6 6 B & To स्त्र्यभिप्रायपुरुषाभिप्राययोः

वैभाषिके सार्धमेकमत्यम्। तथाहि तैरिति विस्तर। तथाहि तै श्रद्धादिभि क्लेशाश्च विस्कम्भ्यन्ते लौकिकमार्गगतैर्मार्गश्चावाह्यते निर्वेधभागीयादिगतै। तदेव व्यवदानसम्भारे श्रद्धादीना प्रत्येकमाधिपत्यमुक्तं भवति।

न ह्यविमुक्तचित्तस्यास्ति परिनिर्वाणमिति। आज्ञातावीन्द्रियं क्षयज्ञानाद्यनास्रवमिन्द्रियम्। तदेव च विमुक्तं क्लेशविमुक्त्या सन्तानविमुक्त्या च। तत्प्राप्तस्य निरुपधिशेषनिर्वाणं भवति। तस्मादाज्ञातावीन्द्रियस्य निरुपधिशेषनिर्वाण आधिपत्यं व्यवस्थाप्यते। दृष्टधर्मसुखविहार प्रतीति विस्तरः। दृष्टो धर्मो दृष्टधर्म. दृष्टजन्मेत्यर्थः। सुखो विहार सुखविहार। दृष्टधर्मे सुखविहार दृष्टधर्मसुखविहार.। तं प्रत्याज्ञातावीन्द्रियस्याधिपत्यं विमुक्तिप्रीतिसुखप्रतिसंवेदनादिति। विमुक्ति. क्लेशप्रहाणं प्रीति सौमनस्य सुखं प्रस्रब्धिसुखं विमुक्त्या प्रीतिसुखस्य प्रतिसंवेदनं विमुक्तिप्रीतिसुखप्रतिसंवेदनम् तस्मादिति। तदुक्तं भवति विमुक्तिप्रीतिसुखप्रतिसंवेदनमेव दृष्टधर्मसुखविहार इति ॥२-४॥

वाक्पाणिपादपायूपस्थानामपि चेन्द्रियत्वमुपसंख्यातव्यमिति। सांख्याश्चक्षुरिन्द्रियादिव्यतिरिक्तानि वागिन्द्रियादीनि कल्पयन्ति' वागिन्द्रियं येन वचनं क्रियते' पाणीन्द्रियं येन किञ्चिद् द्रव्यमादीयते। पादेन्द्रियं येन विहरणं क्रियते चंक्रमणमित्यर्थ' पाय्विन्द्रियं येन पुरीषोत्सर्ग क्रियते' उपस्थेन्द्रियं कायेन्द्रियैकदेशव्यतिरिक्तं येनानन्द सुखविशेष प्राप्यते। न खलूपसंख्यातव्यमाविद्यादीनामिन्द्रियत्वं येनार्थेन भगवता द्वाविंशतिरिन्द्रियाण्युक्तानि। तत्राविद्यादीनामयोगात्। कोऽसावर्थ इत्याह

[चित्ताश्रयस्तद्विकल्पः स्थितिः संक्लेश एव च।
संभारो व्यवदानञ्च यावदेतावदिन्द्रियम् ॥५॥]

चित्ताश्रयस्तद्विकल्पः

इति विस्तर.। चित्तस्याश्रयस्तदाश्रयस्य विकल्पो स्थिति. संक्लेशः [1]व्यवदानसंभारो व्यवदानञ्चेति। एतच्च षडायतनं मौलं सत्त्वद्रव्यमिति तदितरेषा तदाश्रितत्वात्। तथाहि षडिन्द्रियाधिपत्यसंभूतमिन्द्रियाधिष्ठानम्। षड् वा विषया विज्ञानकायाश्च। तदेतदपि सत्त्वद्रव्यमिष्यते न तु मौलम्। न ह्यधिष्ठानाद्याधिपत्यसंभूतं षडायतनमिति। व्यवदानसंभरणं पञ्चभिरिति' श्रद्धादिभिः। व्यवदानं त्रिभिरिति' अनाज्ञातमाज्ञास्यामीन्द्रियादिभिः ॥५॥

1 B. व्यवदाने सभारो

अपर. कल्पः ।

[प्रवृत्तेराश्रयोत्पत्तिस्थित्युपभोगतोऽथवा ।
चतुर्दश तथान्यानि निवृत्ताविन्द्रियाणि च ।।६।।]

**प्रवृत्तेराश्रयोत्पत्तिरिति** विस्तर ' प्रवृत्तिपक्षं निवृत्तिपक्षं चाधिकृत्योच्यते। प्रवृत्ते ससारस्याश्रय उत्पत्तिः। **स्थितिरुपभोगश्च** ' निवृत्तेरपि निर्वाणस्याश्रय उत्पत्ति स्थितिरुपभोगश्च। एतावता च पुरुषार्थपरिसमाप्तिरिति। निरर्थिका तदन्येन्द्रियप्रज्ञप्ति ' भवतामपि पुरुषार्थपरिसमाप्ति पठ्यते। तस्य शब्दाद्युपलब्धिरादिर्गुणपुरुषान्तरोपलब्धिरन्त इति। तत्र षडायतन मूलसत्त्वद्रव्यभूतं संसरतीति प्रवृत्तेराश्रय । **उत्पत्तिस्त्रीपुरुषेन्द्रिय** इति। उत्पद्यतेऽस्या इत्युत्पत्ति । कस्मादित्याह **तत उत्पत्ते** । कस्य ' षडायतनस्य। मन.कायेन्द्रिययो साक्षात्ताभ्यामुत्पत्तेश्चक्षुरादीना चतुर्णां क्रमेणोत्पत्ते ' **स्थितिर्जीवितेन्द्रियेण** षडायतना वस्थानात्। **उपभोगो वेदनादिभि** । सुखादिभि । **श्रद्धादयो हि निवृत्तेराश्रय** इति ' श्रद्धादीना प्रतिष्ठाभूतत्वात्। आज्ञास्यामीन्द्रिय **प्रभव** इत्यादिभव. प्रथमतोऽनास्रवोत्पत्ते । **स्थितिराज्ञेन्द्रियं** प्राबन्धिकत्वात्। **उपभोग** आज्ञातावीन्द्रियेणेति तेन विमुक्तिप्रीतिसुखप्रतिसंवेदनात्। **अत एतावन्त्येवेन्द्रियाणीति** ' नाविद्यादीनामिन्द्रियत्वमिष्टमित्यर्थ । **अत एव चैषामेषोऽनुक्रम** इति । चक्षुरिन्द्रियं यावदाज्ञातावीन्द्रियमिति प्रवृत्तिनिवृत्त्योराश्रयादिभावात्। **वाचस्तु नेन्द्रियत्वं वचने शिक्षाविशेषापेक्षत्वात्** । जातमात्रो हि बालको विनैव शिक्षया चक्षुषा रूपाणि पश्यति न त्वेवं वचन करोति। तस्मादिन्द्रियधर्मातिक्रान्तत्वान्न वाक् इन्द्रियं भवितुमर्हति। जिह्वेन्द्रियाधिष्ठानस्यैव त्वेतत् कर्मवचनमिति। **पाणिपादस्य चादानविहरणादनन्यत्वादिति** । पाणिरेव ह्यन्यथान्यत्र चोत्पन्न **आदानमुच्यते**। पाद एव चान्यथान्यत्र चोत्पन्नो **विहरणमिति** ' कर्माभावात् ' स्वात्मनि च [1]वृत्तिविरोधात् न पाणिपादस्येन्द्रियत्वम्। **उरगप्रभृतीनामिति** । सर्पादीना पाणिपादं नास्ति। **अथ च तेषामादानविहरणं भवति**। न पाणिपादस्येन्द्रियत्वम्। तेषामप्यस्ति सूक्ष्ममिति चेन्न साध्यत्वात् ' **पायोरपि नेन्द्रियत्वमुत्सर्ग** इत्यशुच्युत्सर्गे ' **गुरुद्रव्यस्य** यस्य कस्यचिदाकाशे छिद्रे

सर्वत्र पायुस्थानादन्यत्रापि पतनात्। गुरुद्रव्यस्य गुरुत्वादेव स्वयं पतनं नेन्द्रियकृतम्। **वायुना च तत्प्रेरणादिति**। वायुना तस्य गुरोरशुचिद्रव्यस्य प्रेरणा। वायोरेव तत्कर्म स्यान्न पाय्विन्द्रियस्य तदनुपलब्धे। **उपस्थस्यापि नेन्द्रियत्वमानन्द इति**। कायेन्द्रियैकदेशस्त्रीपुरुषेन्द्रियव्यतिरिक्तकल्पितस्य उपस्थस्य नेन्द्रियत्वमानन्दे। कायेन्द्रियैकदेशभूतस्त्रीपुरुषेन्द्रियकृतं हि तत् क्लिष्टं सौख्यमिति वाक्यार्थ। **कण्ठदन्ताक्षिवर्त्माङ्गुलिपर्वणामपीति** विस्तर। यदि यथोक्तात् कारणादेतावन्त्येवेन्द्रियाणीति नेष्यते। कण्ठस्याभ्यवहरणे दन्तस्य चर्वणे अक्षिवर्त्मन उन्मेषनिमेषे पर्वणोऽस्थिसन्धिसङ्कोचविकाशक्रियायामिन्द्रियत्वं प्रसज्येत। **सर्वस्य वा कारणभूतस्येति** विस्तर। सर्वस्य वा कारणभूतस्य बीजादे स्वस्यां क्रियायां स्वकार्यक्रियायामङ्कुरादिलक्षणायामिन्द्रियत्वं प्रसज्येतेत्यविकृतम्। यदि यस्य यत्र पुरुषकारोऽस्ति तस्य तत्रेन्द्रियत्वमिष्यते। स च नियमहेतुः पूर्वोक्तो नेष्यते। तस्मादयुक्तं वागादीनामिन्द्रियत्वम्।

**तत्र चक्षुरादीनामिति** विस्तर। तत्रेति वाक्योपन्यासे। **कृतो निर्देश इति**।

तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादय ।[1]

कायात् स्त्रीपुरुषेन्द्रिये ।[2]

विज्ञानं प्रतिविज्ञप्तिः[3]

इति। **जीवितेन्द्रियस्येति**।

आयुर्जीवितमाधार उष्मविज्ञानयोर्हि य[4]

इत्यत्र। **श्रद्धादीनां चैतेष्विति**।

श्रद्धाप्रमाद प्रश्रब्धिः[5]

इत्यत्र प्रदेशे। ननु च वेदनाया अपि कृतो निर्देशश्चैत्तेषु च करिष्यते

वेदनानुभव.[6]

इति।

वेदना चेतना संज्ञा[7]

इति वचनात्। सत्यम्। सामान्यं रूपं वेदनाया उक्तम्। वक्ष्यते च। विशेषविभागरूपं त्विह विवक्षितमिति **सुखादीनां कर्तव्यो निर्देश**

1 Kārikā, I 9
2 Kārikā, II 2
3 Kārikā, I 16
4 Kārikā, II 45
5 Kārikā, II 25,
6 Kārikā, I 14
7 Kārikā, II 24

इत्याह । आज्ञास्यामीन्द्रियादीना तर्हि न कर्तव्य·' यस्मान्मनसो लक्षणमुक्तम्' श्रद्धादीना चैत्तेषु करिष्यते' सुखसौमनस्योपेक्षाणामिह क्रियते । एषामपि कर्तव्य एव यस्मान्नवद्रव्यस्वभावत्वमेषा दर्शयितव्यम् । एतस्या चावस्थायामेतानि नव द्रव्याण्यनाज्ञातमाज्ञास्यामीन्द्रियाख्या लभन्ते ' एतस्यामवस्थायामाज्ञेन्द्रियाख्यामेतस्यामाज्ञातावीन्द्रियाख्या लभन्त इति । स एषामवस्थाविशेषो दर्शयितव्य इत्यत· सूक्तमेतत् सुखादीनामाज्ञास्यामीन्द्रियादीना च कर्तव्य इति ॥६॥

**[ दु·खेन्द्रियमसाता या कायिकी वेदना सुखम् ।**
**साता ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम् ॥७॥**
**अन्यत्र सा सौमनस्यमसाता चैतसी पुनः ।**
**दौर्मनस्यमुपेक्षा तु मध्योभय्यविकल्पनात् ॥८॥ ]**

**असाता या कायिकी वेदना**

इति । असातेति सातानिवृत्त्यर्थम् । कायिकीति मानसीनिवृत्त्यर्थम् । तत्र कायाश्चक्षुरादय· पञ्च परमाणुसञ्चयात्मकत्वात् । तत्र काये भवा' कायेन वा[1] आश्रयेण सह चरतीति कायिकी । या **उपघातिका** पञ्चेन्द्रियाश्रया वेदना'तत्

**दुःखेन्द्रियम्**

इत्यवगन्तव्यम् ।

**सुखम्**

**साता**

इति । अत्रेन्द्रियमित्यनुवर्तते' कायिकीति च । सातेति ग्रहणमसातानिवृत्त्यर्थम् । तदेतदुक्तं भवति' **तत् सुखेन्द्रिय** या **अनुग्राहिका** पञ्चेन्द्रियाश्रया[2] वेदनेति ।

**ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम्**

इति । तृतीये तु ध्याने चैतस्यपि साता वेदना सुखेन्द्रियमिति व्यवस्थाप्यते । कस्माच्चैतस्येव साता तत्र गृह्यते' न कायिकीति । अत आह ' **न हि तत्र कायिकी वेदनास्ति**[3] **पञ्चविज्ञानकायाभावादिति** ।

तृतीये ध्याने [4]कस्मात् सा[4] न सौमनस्येन्द्रियम् । अत आह'

तृतीये तु ध्याने प्रीतिर्वीतरागत्वात् सुखेन्द्रियमेव सा न सौमनस्येन्द्रियम्। सातत्वाद्धि सुखमुच्यते। न प्रीतिरसंप्रहर्षाकारत्वात्। तथाहि सूत्र उक्तं प्रीतेर्विरागादुपेक्षको विहरतीति विस्तरेण यावत् स्मृतिमान् सुखविहारी तृतीयं ध्यानमुपसम्पद्य विहरतीति।

सौमनस्यादन्या प्रीतिरिति चेदत आह। प्रीति हि सौमनस्यमिति।

असाता चेतसी पुनः

दौर्मनस्यम्

इति। उपघातिका चैतसिकी वेदना दौर्मनस्यम्।

उपेक्षा तु मध्या

इति उपेक्षेन्द्रियं तु या मध्या वेदना। नैव साता नासातेत्यर्थः।

उभयी

इति। उभयावयवावस्था उभयी कायिकी चैतसिकीत्यर्थः।

अविकल्पनात्

इति। अभिनिरूपणाविकल्पाभावादित्यर्थः। प्रायेणेति ग्रहणं समाधिजविपाकजप्रीतिसुखपरिवर्जनार्थम्। न तु कायिकमिति। न कायिकं सुखदुःखं विकल्पनादुत्पद्यते। किं कारणमित्याह। विषयवशादर्हतामप्युत्पत्तेरिति। प्रहीणप्रियाप्रियविकल्पानामप्यर्हतां विषयवशेनैव कायिकसुखदुःखोत्पादात्। अतस्तयोरिन्द्रियत्वेन भेद इति। तयोः कायिकचैतसिकयोः सुखयोर्दुःखयोश्च इन्द्रियत्वेन भेदः पृथक्त्वं सुखेन्द्रियं सौमनस्येन्द्रियं दुःखेन्द्रियं दौर्मनस्येन्द्रियमिति। उपेक्षा तु स्वरसेनैवानभिसंस्कारेणाविकल्पयत एवानभिनिरूपयत एवोत्पद्यते कायिकी चैतसिकी वा विपाकजा नैष्यन्दिकी वा। तस्मादेकमिन्द्रियं क्रियते इन्द्रियत्वेनाभेद उपेक्षेन्द्रियमिति। अन्यथा च कायिकमिति विस्तरः। अन्येनानुभवरूपविशेषेण कायिकं सुखमनुगृह्णाति। अन्येन चैतसिकम्। स्थिरं हि कायिकम्। अस्थिरं हि चैतसिकम्। एवं दुःखमन्ये नानुभवरूपविशेषेण कायिकमुपहन्ति। अन्येन चैतसिकमिति। उपेक्षाया [1]नैष विकल्प इति। एष स्वरूपविशेषलक्षणो विकल्पो नास्ति। अत उपेक्षणं प्रति उपेक्षाक्रियां प्रति। अविकल्पनादस्वभावविशेषादभेदः ॥७-८॥

---

1 Mss. & B. लेप

[ दृग्भावनाशैक्षपथे नव त्रीण्यमलं त्रयम् ।
रूपीणि[1] जीवितं दुःखे सास्रवाणि नव द्विधा ॥९॥]

**दृग्भावनाशैक्षपथे**

इति । दृग् दर्शनम् । दृशो भावनाया अशैक्षस्य च पन्था दृग्भावनाशैक्षपथः । तस्मिन्नेव **मार्गत्रये** यानि मनःसुखसौमनस्योपेक्षाश्रद्धावीर्यस्मृतिसमाधिप्रज्ञाख्यानि **नव** द्रव्यानि । तानि **दर्शनमार्गे अनाज्ञातमाज्ञास्यामीन्द्रियम्। भावनामार्गे आज्ञेन्द्रियम्। अशैक्षमार्गे आज्ञातावीन्द्रियमिति** व्यवस्थाप्यन्ते । अन्योन्यमपेक्षमाणानि तानि नव द्रव्याणि तत्तन्नाम लभन्ते । नवेति च [2]कलापान्तरापेक्षयैवमुक्तं नत्वेकस्मिन् चित्तकलापे नव द्रव्याणि भवन्ति । सुखसौमनस्योपेक्षेन्द्रियाणामेकतरस्यैव भावात् । यदि हि स मार्गोऽनागम्यध्यानान्तरचतुर्थध्यानाकाशविज्ञानाकिंचन्यायतनभूमिकः तत्रोपेक्षेन्द्रियमेव। न सुखसौमनस्येन्द्रिये । यदि प्रथमद्वितीयध्यानभूमिकः तत्र सौमनस्येन्द्रियमेव । यदि तृतीयध्यानभूमिकः तत्र सुखेन्द्रियमेव नान्यदिति । **अनाज्ञातमाज्ञातुं प्रवृत्त** इति । अनाज्ञातं सत्यचतुष्टयमाज्ञातुं वेदितुं प्रवृत्तः आज्ञास्यामीति प्रारब्धः । तस्येन्द्रियमनाज्ञातमाज्ञास्यामीन्द्रियम् । अलुक्समासः । आख्यातप्रतिरूपकश्चायमाज्ञास्यामीति शब्दः । **भावनामार्गे नास्त्यपूर्वमाज्ञेयं तदेव**[3] **तु** सत्यचतुष्टयमा**जानाति शेषानुशयप्रहाणार्थं** भावनाहेयक्लेशप्रहाणार्थम् । तस्याज्ञस्य पुद्गलस्येन्द्रियमाज्ञेन्द्रियम् । आज्ञमेवेन्द्रियमिति वा । **अशैक्षमार्गे त्वाज्ञातमित्यवगम आज्ञाताव** इति । [4]अर्थकथनमात्रमेतत् । शब्दविग्रहस्त्वेवं कर्तव्यः । [5]आज्ञातमित्याव आज्ञाताव । अवतेर्घञि रूपमेतदाव इति । **सोऽस्यास्तीति** मत्वर्थीय **आज्ञातावी । आज्ञातमवितुं शीलमस्येति वेति** ताच्छीलिको णिनिः । **तथा भूतस्येन्द्रियमिति** । तथाभूतस्य पुद्गलस्येन्द्रियम् । आज्ञाताविन इत्यर्थः ।

**अमलं त्रयम्**

इति । अमलमेव त्रयमित्यवधार्यते । ननु चायमनास्रवसास्रवप्रकारभेद उक्तो धातुनिर्देशे ।

अनास्रवा मार्गसत्यम्[1]

इति । तथा

सास्रवानास्रवा एते त्रय· शेषास्तु सास्रवा[2]

इत्यादिवचनात्। सत्यमुक्तोऽयमेवमादि प्रकारभेद । स तु सामान्यरूपेणोक्तो न भेदरूपेण। अतः शिष्यसुखप्रतिपत्त्यर्थमयमेवमादिप्रकारभेद प्रतिपदरूपेण पुनरभिधीयत इत्येवमवगन्तव्यम्। द्विधा नवेति न सूत्रयितव्यम्[3]। एकान्तानास्रवसास्रवनिर्धारणादेव हि द्विधा न वेति सिद्धे·।यदि ह्येतानि नवैकान्तेनानास्रवाणि स्युरेकान्तानास्रवेष्वाज्ञास्यामीन्द्रियादिषु पठ्येरन्। तथैकान्तसास्रवाणि स्युः। एकान्तसास्रवेषु रूपीन्द्रियजीवितदु खदौर्मनस्येषु[4] पठ्येरन्[5]। न चैवम्। अतो नव द्विधेति सिद्धम्। अस्त्येतदेवम्।मतान्तरनिवृत्त्यर्थं तु पुनरिदमुच्यते

**नव द्विधा**

इति। द्विधैव नव नानास्रवाणि यथैके कथयन्ति। तत्सिद्धये चागममानयन्ति। **यस्येमानीति** विस्तरः। **सर्वेण सर्वाणि न सन्तीति**। सर्वेण प्रकारेण मृदुमध्याधिमात्रभेदेन। सर्वाणीति पञ्चापि न सन्तीत्यर्थ। **पृथग्जनपक्षावस्थितं वदामीति वचनात्**। अर्थादेतदुक्तं भवति। यस्येमानि सन्ति स आर्य इति। **नेद ज्ञापकं** तेषामनास्रवत्वमधिकृत्येत्याचार्य। तथाह्यार्यपुद्गलव्यवस्थानं कृत्वा **यस्येमानीत्याहेति**।कथम्। पञ्चेमानि भिक्षव इन्द्रियाणि। कतमानि पञ्च। श्रद्धेन्द्रियं यावत् प्रज्ञेन्द्रियम्।एषा पञ्चानामिन्द्रियाणां तीक्ष्णत्वात् परिपूर्णत्वादर्हन् भवति। ततस्तनुतरैर्मृदुतरैरनागामी भवति। ततस्तनुतरैर्मृदुतरै· सकृदागामी।ततस्तनुतरैर्मृदुतरै· स्रोतआपन्न। ततोऽपि तनुतरैर्मृदुतरैर्धर्मानुसारी। ततस्तनुतरैर्मृदुतरै· श्रद्धानुसारी। इति हि भिक्षव इन्द्रियपारमितां प्रतीत्य फलपारमिता प्रज्ञायते। फलपारमितां प्रतीत्य पुद्गलपारमिता प्रज्ञायते। यस्येमानि पञ्चेन्द्रियाणि सर्वेण सर्वाणि न सन्ति। तमहं बाह्यं पृथग्जनपक्षावस्थितं वदामीति। तदेवमार्यपुद्गलव्यवस्थानं कृत्वा यस्येमानीत्याह भगवानिति। **पृथग्जनो वा द्विविध इति। आभ्यन्तरकश्च बाह्यकश्च। असमुच्छिन्नकुशलमूल** आभ्यन्तरको बौद्धसंगृहीतत्वात्। **समुच्छिन्न-**

---

1 Kārikā, I 5
2 Kārikā, I 31
3 Mss °तव्यः
4 Mss °दौर्मनस्यमध्ये
5 V पश्येरन्

**कुशलमूलस्तु** बाह्यकस्तद्विपर्ययात्। अतएव च बाह्यमिति विशेषणम्। इतरथा हि पृथग्जनपक्षावस्थितं वदामीत्येवावक्ष्यत्। **उक्तं च सूत्रे**[1] इति। अथ भगवतोऽचिराभिसंबुद्धस्यैतदभवत्। अधिगतो मे धर्मो गम्भीरो गम्भीरावभासो दुर्दर्शो दुरवबोधोऽतर्क्योऽतर्कावचरः सूक्ष्मो निपुण पण्डितविज्ञवेदनीय। तं चाहं परेषामावेदयेयम्। तं च परे न विजानीयु। स मम स्याद्विघातः स्यात् क्लमथ॰ स्याच्चेतसोऽनुदय। यं न्वहमेकाकी अरण्ये प्रवणे[2] दृष्टधर्मसुखविहारतायोगमनुयुक्तो विहरेयम्। अथ ब्रह्मण सहापते र्ब्रह्मलोके स्थितस्यैतदभवत्। नश्यति बतायं लोकः प्रणश्यति बतायं लोक। यत्रेदानी कदाचित् कर्हिचित् तथागता अर्हन्त॰ सम्यक्संबुद्धा लोक उत्पद्यन्ते। तद्यथोदुम्बरपुष्पम्। तस्य चाद्य भगवतोऽल्पोत्सुक-विहारिताया चित्तं क्रामति न धर्मदेशनायाम्। यं न्वहं गत्वा अभ्येपयेयम्। अथ ब्रह्मा सहापति तद्यथा बलवान् पुरुष सम्मिञ्जितं बाहुं प्रसारयेत् प्रसारितं वा सम्मिञ्जयेत्। एवमेव ब्रह्मा सहापतिर्ब्रह्मलोके अन्तर्हितो भगवत पुरस्तात् प्रत्यस्थात्। अथ ब्रह्मा तस्यां वेलायां गाथामभाषत।

प्रादुर्बभूव मगधेषु पूर्वं धर्मो ह्यशुद्ध॰ समलानुबद्ध॰।
अपावृणोष्व अमृतस्य द्वारं वदस्व धर्मं विरजं[3] निरङ्गणम्॥

अथ भगवानस्यां वेलाया इमे गाथे अभाषत्।

कृच्छ्रेण मे अधिगतो ब्रह्मन् खिलां प्रविदाल्य
भवरागपरीतैश्च नायं धर्मः सुसंबोध॰[4]।
प्रतिस्रोतोपमं मार्गं गम्भीरमतिदुर्दृशम्
न द्रक्ष्यन्ते रागरक्तास्तमस्कन्धेन चावृता॥

ब्रह्मावोचत् । **सन्ति भदन्त सत्त्वा लोके जाता लोके वृद्धास्तीक्ष्णेन्द्रिया अपि मध्येन्द्रिया अपि मृद्विन्द्रिया अपि इत्यप्रवर्तित एव स्वधर्मचक्र** इति विस्तर॰। इन्द्रियाणि श्रद्धादीनि। यैस्ते भव्या उक्ता। यस्मादप्रवर्तितेऽपि धर्मचक्रे सन्ति

किञ्चिन्न यदसत्त्वसंख्यातमिति विकल्प. । प्रतिसंख्याप्रतिसंख्यानिरोधयोर्यद्यपि प्राप्तिरस्ति न तु तावुत्पद्येते इति न तयोर्ग्रहणम् । सहोत्पादननियमो ह्ययमारम्भ[1] इति' असत्त्वसंख्यातस्य प्राप्तिर्नास्तीति किमत्र कारणम्' सर्वसत्त्वसाधारणत्वात् । सहजयैव च प्राप्तया प्राप्तिमान् सहोत्पद्यते ' न पूर्वपश्चात्कालजयेत्यवगन्तव्यम् ।

**गतिविषय** इति' उत्पत्तिविषय इत्यर्थ. ' **महाभूमिका** इति ' महत्त्वं सर्वचित्तभवत्वात् ।।२३।।

**[ वेदना चेतना संज्ञा छन्द. स्पर्शो मतिः स्मृतिः ।**
**मनस्कारोऽधिमोक्षश्च समाधिः सर्वचेतसि ]।।२४।। ]**

**इमे किलेति** । किलशब्द परमतद्योतने । स्वमतं तु छन्दादय सर्वचेतसि न भवन्ति । तथा ह्यनेनैवाचार्येण पञ्चस्कन्धके लिखितम् । छन्द कतम ' अभिप्रेते वस्तुन्यभिलाषः । अधिमोक्षः कतम ' निश्चिते वस्तुनि तथैवावधारणमित्यादि । **चेतना चित्ताभिसंस्कार** इति ' चित्तप्रस्पन्द । प्रस्पन्द इव प्रस्पन्द इत्यर्थ. । **विषयनिमित्तग्राह** इति । विषयविशेषरूपग्राह[2] इत्यर्थ । **स्पर्श इन्द्रियविषयविज्ञानसन्निपातजा स्पृष्टिरिति** । इन्द्रियविषयविज्ञानाना सन्निपाताज्जाता स्पृष्टि । स्पृष्टिरिव स्पृष्टि । यद्योगादिन्द्रियविषयविज्ञानान्यन्योन्यं स्पृशन्तीव स स्पर्श । **धर्मप्रविचय** इति । प्रविचिनोतीति प्रविचय । प्रविचीयन्ते वानेन धर्मा इति प्रविचय. । येन संकीर्णा इव धर्मा पुष्पाणीव प्रविचीयन्ते ' उच्चीयन्त इत्यर्थ' । इमे सास्रवाः इमेऽनास्रवाः ' इमे रूपिण' ' इमे अरूपिण इति । धर्माणा प्रविचयो धर्मप्रविचयः । प्रतीतत्वात् प्रज्ञेति वक्तव्ये श्लोकबन्धानुगुण्येन मतिरिति कारिकायामुक्तम् । **स्मृतिरालम्बनासंप्रमोप** इति । यद्योगादालम्बनं न मनो विस्मरति' तच्चाभिलपतीव[3] ' सा स्मृति. । **मनस्कारश्चेतस आभोग** इति । आलम्बने चेतस आवर्जनम् ' अवधारणमित्यर्थः । मनसः कारो मनस्कारः । मनो वा करोति आवर्जयतीति मनस्कार' । **अधिमुक्तिस्तदालम्बनस्य गुणतोऽवधारणम्**[4] । रुचिरित्यन्ये । यथानिश्चयं धारणेति योगाचारचित्ताः । **समाधिश्चित्तस्यैकाग्रतेति** । अग्रमालम्बनमित्येकोऽर्थ. ।

---

1 Mss ०मारब्ध
2 A ०ग्राहक
3 Mss. & B. ०पतीव
4 Mss. ०धारणात्

यद्योगाच्चित्तं प्रबन्धेन एकत्रालम्बने वर्तते । स समाधि. । यदि समाधिः सर्वचेतसि भवति । किमर्थं ध्यानेषु यत्न. क्रियते। बलवत्समाधिनिष्पादनार्थम् ।

कथमेकस्मिंश्चित्ते दशानां भिन्नलक्षणानां चैत्तानामस्तित्वं गम्यत इति । अत आह । **सूक्ष्मो हि चित्तचैत्तानां विशेष** इति विस्तरः । स एष विशेषश्चित्तचैत्तानां दुर्लक्ष्य. प्रबन्धेष्वपि तावत् किं पुनः क्षणेषु कालपर्यन्तलक्षणेषु । रूपिणीनामप्योषधीनां मूर्तानामपि कासाञ्चित् हरीतकीप्रभृतीनां **बहुरसानां** [1]षड्रसानामिन्द्रियग्राह्या जिह्वेन्द्रियग्राह्या [2]**दुरवधारा** दु परिच्छेदा **भवन्ति** । **किं पुनर्ये धर्मा अमूर्ता बुद्धिग्राह्या** मनोविज्ञानमात्रग्राह्या. । तस्मादाप्तोपदिष्टा इति कृत्वा तथैव ते प्रतिपत्तव्या इत्यभिप्रायः ॥२४॥

**[श्रद्धाप्रमाद प्रश्रब्धिरुपेक्षा ह्रीरपत्रपा ।**
**मूलद्वयमविहिंसा वीर्यञ्च कुशले सदा ॥२५॥ ]**

**श्रद्धा चेतस प्रसाद** इति। क्लेशोपक्लेशकलुषितं चेत. श्रद्धायोगात्प्रसीदति । उदकप्रसादकमणियोगादिवोदकम् । **सत्यरत्नकर्मफलाभिसंप्रत्यय**[3] **इत्यपरे** इति । आकारेण श्रद्धानिर्देश. । सत्येषु चतुर्षु रत्नेषु च त्रिषु कर्मसु च शुभाशुभेषु । तत्फलेषु च इष्टानिष्टेषु । सन्त्येवैतानीत्यभिसंप्रत्ययोऽभिसंप्रतिपत्ति· श्रद्धेति । **अप्रमादः कुशलाना धर्माणा भावनेति** । भावना नाम कुशलानां प्रतिलम्भनिषेवणस्वभावा ।

प्रतिलम्भनिषेवाख्ये शुभसंस्कृतभावने[4]

इति वचनात् । सा कथमप्रमादो नाम चैतसिको भविष्यति । यस्मिन्सति सा प्रतिलम्भनिषेवणभावना भवति । सोऽप्रमादस्तात्पर्यलक्षणः । अत आह । **या तेष्ववहिततेति** । तदेवं सति भावनाहेतावयं भावनोपचार कृत इति । **चेतस आरक्षेति** । यः सांक्लेशिकेभ्यश्चित्तमारक्षते । **सोऽप्रमाद** इति । **चित्तकर्मण्यतेति** । यद्योगाच्चित्तं कर्मण्यं भवति । सा चित्तकर्मण्यता । चित्तलाघवमित्यर्थ· । **ननु च सूत्रे कायप्रश्रब्धिरप्युक्ते**ति । कथ पर्यायो यत्प्रश्रब्धिसंबोध्यङ्गद्वयं भवति । अस्ति कायप्रश्रब्धिः। अस्ति चित्तप्रश्रब्धिः ।

---

1 V षड्रसा०
2 Mss दुरवधाना
3 Mss ०प्रत्य
4 Kārıkā, VII. 27

तत्र यापि कायप्रस्रब्धिस्तदपि प्रस्रब्धिसंबोध्यङ्गमभिज्ञायै संबोधये निर्वाणाय संवर्तते। यापि चित्तप्रस्रब्धिस्तदपि प्रस्रब्धिसंबोध्यङ्गमभिज्ञायै संबोधये निर्वाणाय संवर्तत इति। कथमियमेकैवोच्यते प्रस्रब्धिश्चित्तकर्मण्यतेति। **सा तु यथा कायिकी वेदनेति** । यथा चेतस्यपि वेदना परमाणुसञ्चयात्मकेन्द्रियाश्रयत्वात् कायिकीत्युच्यते । **तथेयमपि प्रस्रब्धिरवगन्तव्या। कथं सा बोध्यङ्गं पु योक्ष्यत** इत्यसमाहितत्वात् पञ्चाना विज्ञानकायाना पृच्छति। **तत्र तर्हीति** विस्तर. । तत्र सूत्रे कायवैशारद्यमेव कायकर्मण्यता भूतविशेषलक्षणा प्रीत्यभ्याकृता[1] । प्रीतमनस काय. प्रस्रभ्यत इति वचनात्। **कथं सा बोध्यङ्गमिति**। पृथक्कलापत्वात्सास्रवत्वाच्च न युज्यत इत्यभिप्राय.। **प्रीतिः प्रीतिस्थानीयाश्च धर्मा. प्रीतिसंबोध्यङ्गमिति** विस्तर । तीर्थिकाः किल भगवच्छ्रावकानेवमाहु । श्रमणो भवतो[2] गौतम एवमाह । [3]एत यूयं भिक्षव. पञ्च निवरणानि प्रहाय चेतस उपक्लेशकराणि प्रज्ञादौर्बल्यकराणि सप्त बोध्यङ्गानि भावयतेति। वयमप्येवं ब्रूम । तत्कोऽस्माकं श्रमणस्य च गौतमस्य को विशेषो धर्मदेशनाया.। तेभ्यो भगवता एतदुपदिष्टम् । पञ्च सन्ति दश भवन्ति । दश सन्ति पञ्च व्यवस्थाप्यन्ते। प्रतिघ. प्रतिघनिमित्तं च नवाघातवस्तूनि **व्यापादनिवरणमुक्तं** भगवता तदानुकूल्यात्। तथा सप्त सन्ति चतुर्दश भवन्ति । चतुर्दश सन्ति सप्त व्यवस्थाप्यन्ते । प्रीति. प्रीतिनिमित्त चेत्यनेन भेदेन तदानुकूल्यादिति। **न च संकल्पव्यायामौ प्रज्ञास्वभावाविति** । तयोर्यथाक्रमं वितर्कवीर्यस्वभावत्वान्न तौ प्रज्ञास्वभावौ। यदा च त्रिस्कन्धो मार्ग. क्रियते शीलस्कन्ध समाधिस्कन्ध प्रज्ञास्कन्ध इति। तत्र प्रज्ञास्कन्धनिर्देश उक्तम्। प्रज्ञास्कन्ध कतम. । सम्यग्दृष्टि सम्यक्संकल्प. सम्यग्व्यायाम इति। **उपेक्षा चित्तसमतेति**। यद्योगाच्चित्तं सममनाभोगं वर्तते । सोपेक्षा संस्कारोपेक्षा नाम। त्रिविधा हि उपेक्षा । वेदनोपेक्षा संस्कारोपेक्षा अप्रमाणोपेक्षा चेति।

**ननु चोक्तं दुर्ज्ञान एषा विशेष** इति। सूक्ष्मो हि चित्तचैत्ताना विशेष । स एष दुःपरिच्छेद. प्रवाहेष्वपि तावदित्यादिवचनाद्दुःखेन ज्ञायते दुर्ज्ञानः। **अस्ति हि नाम दुर्ज्ञानमपि ज्ञायते।** यदविरुद्धमेकस्मिंश्चित्तक्षणे धर्मान्तरेण स्पर्शादिना। **इदं तु खलु अतिदुर्ज्ञानं यद्विरोधेऽप्यविरोध** इति । आभोगानाभोगयोरेकस्मिंश्चित्तक्षणेऽविरोधो व्यव-

1 B ०भ्याहृता

2 Mss, B & To भवन्तो

3 B & To एव

स्थाप्यत इति वाक्यशेष.। न हि विरुद्धयो. सुखदु खयोरेकस्मिंश्चित्तक्षणे भावो दृष्ट इति। अन्यत्राभोग इति। अन्यत्रालम्बने आभोग अन्यत्रानाभोग इत्यविरोध.। एवंजानीयकमत्रान्यदप्यायास्यतीति। विरोधजातीयं यथा वितर्कविचारौ। तयोर्हि लक्षणम् ' चित्तौदारिकता वितर्क. ' चित्तसूक्ष्मता विचार इति।

वितर्कविचारौदार्यसूक्ष्मते[1]

इति वचनात्। तयोस्त्वेकत्र चित्ते विरोध इति वक्ष्यते। यस्तस्य नयः ' सो ऽस्यापीति। पर्यायेणानयोर्वृत्तिरित्यभिप्रायः। ह्रीरपत्राप्यं च पश्चाद्वक्ष्यते इति।

अह्रीरगुरुतावद्ये भय।दर्शितमलपा[2]

इत्यत्र विपर्ययग्रहणात्। स तु प्रज्ञात्मक इति। स त्वमोहः प्रज्ञास्वभाव । प्रज्ञा च महाभूमिकेति।

मति स्मृतिः[3]

इति वचनात्। नासौ कुशलमहाभूमिक एवोच्यते। कि तर्हि ' अकुशलादि-भूमिकोऽपीति। अविहेठनेति। यद्योगात्परो न विहेठ्यते। साविहिंसा। विहिंसाप्रतिपक्षश्चैतसिक.। चेतसोऽभ्युत्साह इति। कुशलक्रियायां[4] यश्चेतसो ऽभ्युत्साहस्तद्वीर्यम्। यस्त्वकुशलादिक्रियाया चेतसोऽभ्युत्साहो नैत-द्वीर्यम् ' कौसीद्यमेव तत् प्रवचने पठ्यते सीदनात्मकत्वात्। तथा ह्युक्तं भगवता ' इतो वाह्यकानां यद्वीर्यं कौसीद्यमेव तदिति ॥२५॥

[ मोहः प्रमादः कौसीद्यमाश्रद्ध्यं[5] स्त्यानमुद्धतिः[6]।
सर्वदा क्लिष्टेऽकुशले त्वाह्रीक्यमनपत्रपा ॥२६॥ ]

मोहो नामाविद्येति।

विद्याविपक्षो धर्मोऽन्योऽविद्या[7]

इति पश्चाद्व्याख्यायते। भावनाविपक्षो धर्म इति। भावनाया अभावमात्रप्रतिप-

1 Kārıkā, II 33
2 Kārıkā, II 32
3 Kārıkā, III 28
4 V कुशलाक्रियाया
5 Poussin, Fragment des Kārıkās ॰माश्राद्ध्य॰
6 Ibid ॰मुद्धव:
7 Kārıkā, III 28

त्तिर्मा भूदिति भावनाविपक्ष इत्याह। एवं [1]कौसीद्यादिष्वपि व्याख्येयम्। **कायगुरुता चित्तगुरुतेति**। प्रस्रब्धिप्रतिपक्षो धर्म.। **यथा कायिकी वेदनेति**। यथा वेदना रूपीन्द्रियाश्रयत्वाच्चैतसिक्यपि कायिकीति व्याख्याता। तथा कायिकं स्त्यानम्' पञ्चविज्ञानकायसंप्रयुक्तं स्त्यानं कायिकमित्युच्यते। **औद्धत्यं चेतसोऽव्युपशम इति**। नृत्यगीतादिशृङ्गारवेषालंकारकायौद्धत्य[2]-संनिश्रयदानकर्मकश्चैतसिको[3] धर्म.।

**न चात्र स्त्यानं पठ्यते इत्यभिधर्मे। प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञ इति**। पाठप्रामाण्यमात्रेण दश क्लेशमहाभूमिकाः प्राप्ता इत्येतामेव प्राप्तिं जानीते देवाना प्रियः' न त्वाचार्याणामिष्टिमिच्छां जानीते। कोऽयं देवाना प्रियो नाम' ऋजुकजातीयो देवानां प्रिय इत्येके व्याचक्षते ' अशठो हि देवाना प्रियो भवति ' मूर्खो देवाना प्रिय इत्यपरे।

यो हीश्वराणामिष्टः स न ताडनेन शिक्षते

इति मूर्खो भवतीति। **यथैवामोह इति**। यथैवामोह. कुशलमूलं प्रज्ञास्वभावत्वान्महाभूमिक इति व्यवस्थापितो **न कुशलमहाभूमिक** एवेत्यवधार्यते ' ततश्च कुशलमहाभूमिकेषु न पठितः। तथा मुषितस्मृत्यादयोऽपि पञ्चमहाभूमिकत्वान्न क्लेशमहाभूमिका एवेत्यवधार्यन्ते। ततश्च इमे न क्लेशमहाभूमिकमध्ये पठ्यन्ते। कथमित्याह। **स्मृतिरेव हि क्लिष्टा मुषितस्मृतिता' समाधिरेव क्लिष्टो विक्षेप इत्येवमादीति**। आदिशब्देन प्रज्ञैव क्लिष्टा असंप्रजन्यम्। मनस्कार एव क्लिष्टोऽयोनिशोमनस्कारः ' अधिमुक्तिरेव क्लिष्टा मिथ्याधिमोक्ष इति दर्शयति।

**अत एवोच्यत** इति विस्तर। यत एवं स्मृत्यादयो मुषितस्मृतितादयो व्यवस्थाप्यन्ते नैतद्व्यतिरिक्ता। अत एवोच्यते **चतुष्कोटिक** इति। **ये महाभूमिकाः क्लेशमहाभूमिका अपि त** इति काक्वा[4] पृच्छति। चतुष्कोटिका। स्युर्महाभूमिका न क्लेशमहाभूमिका. ' स्यु क्लेशमहाभूमिका न महाभूमिका. ' स्युर्महाभूमिकाश्च क्लेशमहाभूमिकाश्च' स्युर्नैव महाभूमिका न क्लेशमहाभूमिका.। **तृतीया स्मृत्यादय** इति। ये मुषितस्मृत्यादयः **पञ्च** यथोक्ताः। एते हि महाभूमिकाः क्लेशमहाभूमिकाश्च। **चतुर्थी एतानाकारान्**[5] **स्थापयित्वेति**। उक्तनिर्मुक्ता धर्मा.

---

1 Mss. & To कौशीद्य०

2 Mss ०वेषालंकारकायौद्धत्य०

3 A कर्मचैतसिको

4 Mss काङ्क्षा

5 B एतामाकारा

कुशलमहाभूमिकादयश्चैतसिका रूपादयश्चान्य इति । तेषामन्यथा चतुष्कोटिक इति । द्वितीयाया कोट्या विक्षेप प्रक्षेप्तव्य· । न तु तृतीयायाम् । अत एवं वक्तव्यम् । प्रथमा कोटि पूर्ववत् । द्वितीया आश्रद्धयं कौसीद्यमविद्या औद्धत्य प्रमादो विक्षेपश्च । तृतीया स्मृत्यादयश्चत्वार । [1]मुषितस्मृत्यसंप्रजन्यायोनिशोमनस्कारमिथ्याधिमोक्षा[2] इत्यर्थ· । चतुर्थी पूर्ववत् । यत्तूक्तं न चात्र स्त्यानं पठ्यत इति तान्प्रति ब्रवीति । **स्त्यानं पुनरिष्यत** इति विस्तर । **तस्यापाठे कस्यापराध** इति। किमस्य स्त्यानस्यापाठे ममापराध· । किमाभिधार्मिकस्येति । अभिधर्मकारस्यायमपराधो न ममेत्यभिप्राय· । स्त्यानस्य [3]सर्वक्लेशसंप्रयोगित्वेनाभिमतत्वात् । **एवं त्वाहुरिति** । तत्र शास्त्रे स्त्यानस्यापाठे कारणमाहुराभिधार्मिका [4] । **क्षिप्रतरं किलेति** । किलशब्दोऽसम्भावनायाम् । कथं हि नाम क्लिष्टो धर्म शुक्लस्य समाधेरनुगुणो भविष्यति । लयौद्धत्ये हि समाधिपरिपन्थिनी । तत्कथ परिपन्थ्येवानुगुण[5] इति । **न ह्येते जातु सहचरिष्णुता**[6] **जहीत** इति । न ह्येते स्त्यानौद्धत्ये कदाचित्सहचरधर्मता त्यजत इत्यर्थः । **तथापि यद्यस्याधिमात्रमिति** । एवमपि [7]च स्त्यानमौद्धत्यं वा यस्य पुद्गलस्याधिमात्रम् । स[8] पुद्गलस्तच्चरित स्त्यानचरित औद्धत्यचरितो वावगन्तव्यः । क्वचिद्धि कलापे कश्चिद्धर्म उद्भूतो[9] भवतीति । **नान्यत्रेति** । कुशलादिषु ।

**अकुशले त्वाह्रीक्यमनपत्रपा**

इति । तुशब्दो विशेषणे अवधारणे वा ।अकुशल एवेति ॥२६॥

**[ क्रोधोपनाहशाठ्येर्ष्याप्रमादम्रक्षमत्सरा ।**
**मायामदविहिंसाश्च परीत्तक्लेशभूमिकाः ॥२७॥ ]**

**परीत्तक्लेशभूमिकाः**

इति । परीत्तोऽल्पक[10] । को ऽसौ । **अविद्यामात्रम्** अविद्यैव केवलेत्यर्थं । **तेनाविद्यामात्रेणेति** नान्येन रागादिना क्लेशेन । **भावनाहेयेनेति** । [11]न दर्शनहेयेन । **मनोभूमिकेनैवेति** न पञ्चविज्ञानकायिकेन । यस्मादिमे क्रोधादय उपक्लेशा मनोभूमिका एव भवन्ति । अतो मन संप्रयोगात्परीत्तक्लेशभूमिका

1 To मुषिता०
2 V ०मिथ्याधिकारमोक्षा
3 To सर्वक्लेशसंयोगित्वे°
4 Mss रभिधार्मिकाः
5 To ०नुगुणे
6 A ०रिष्णुता
7 Mss यः
8 A omits स·.
9 Mss. उद्वृत्तो
10 Mss परीत्तः क्लेशोल्पकः
11 A drops न.

उच्यन्ते। रागादिकलापे ह्यवश्यमविद्यया भवितव्यमिति न परीत्तो रागादिक । तदेवं ये सर्वत्र चैतसिके ते[1] महाभूमिकाः। ये कुशल एव ते कुशलमहाभूमिका[2]। ये क्लिष्टे निवृते चाकुशले च ते क्लेशमहाभूमिका[3]। ये त्वकुशल एव तेऽकुशलमहाभूमिकाः। ये परीत्तक्लेशसंप्रयुक्ते चेतसि ते परीत्तक्लेशभूमिका[4]। एषां तु निर्देश उपक्लेशेषु करिष्यत इति। अनुशयनिर्देशे ॥२७॥

[सवितर्कविचारत्वात् कुशले कामचेतसि ।
द्वाविंशतिश्चैतसिकाः कौकृत्यमधिकं क्वचित् ॥२८॥
आवेणिके त्वकुशले दृष्टियुक्ते च विंशतिः ।
क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः ॥२९॥
निवृतेऽष्टादशान्यत्र द्वादशाव्याकृते मताः ।
मिद्धं सर्वाविरोधित्वाद् यत्र स्यादधिकं भवेत् ॥३०॥ ]

**अन्येऽपि चानियता** इति। ये कदाचित्कुशले [5]कदाचिदकुशले[5] कदाचिद्व्याकृते चेतसि भवन्ति। **मिद्धादय** इति। आदिशब्देनारतिविजृम्भिकातन्द्रीभक्तेऽसमतादय उपक्लेशा क्लेशाश्च रागादयोऽप्यनियतत्वेन गृह्यन्ते। न ह्येते रागादयः पञ्चानां प्रकाराणां अन्यतमस्मिन्नियता भवन्ति। न महाभूमिकाः सर्वत्र चेतस्यभावात्। न [6]कुशलमहाभूमिकाः कुशलत्वायोगात्। न क्लेशमहाभूमिका सर्वत्र क्लिष्टे तदभावात्। न हि सप्रतिघे चेतसि रागो भवति सरागे च चेतसि प्रतिघः। इत्येवमन्येऽपि क्लेशा वक्तव्या। अत्राचार्यवसुमित्रः संग्रहश्लोकमाह।

वितर्कचारकौकृत्यमिद्धप्रतिघसक्तयः ।
मानश्च विचिकित्सा चेत्यष्टावनियताः स्मृताः ॥

इति। तदिदमष्टानियमवचनं[7] न बुध्यामहे। दृष्टयोऽपि कस्मान्नानियता इष्यन्ते। न हि सप्रतिघे सविचिकित्से वा चित्ते मिथ्यादृष्टिः प्रवर्तते।

आवेणिकत्वेऽकुशले दृष्टियुक्ते च विंशतिः ।
क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः[8] ॥

---

1 Mss omit it
2 A drops महा, V omits from ये कुशल up to भूमिकाः
3 A drops महा
4 Mss परीत्तक्लेशमहाभूमिकाः
5 5 Mss. omit this portion.
6 A adds कुशलभूमिकाः.
7 Mss अष्टनियम०
8 Kārikā, II. 29.

इति वचनात् । तस्माद्यद्वा तद्वेदमुक्तमिति पश्याम ।

**कामावचरं तावत्पञ्चविधमिति । कुशलमेकम् । अकुशलं द्विविधम् । आवेणिकमविद्यामात्रसंप्रयुक्तं रागाद्यन्यक्लेशसंप्रयुक्तं च । अव्याकृतमपि द्विविधम् । निवृताव्याकृतं** सत्कायान्तग्राहदृष्टिसंप्रयुक्त**मनिवृताव्याकृतं च** विपाकजादीनि । **कुकृतभावः कौकृत्यमिति** । अर्थस्य कुकृतस्य धर्म । स [1]तु चैतसिक इति न संबध्यते । तस्मादाह । **इह तु पुन· कौकृत्यालम्बनो धर्म** इति । किंस्वभाव इत्याह । **चेतसो विप्रतिसार** इति । यदि कौकृत्यालम्बनो धर्म कौकृत्यमुच्यते तत्संप्रयुक्ता अप्यन्ये चित्तचैत्ता कौकृत्यं प्राप्नुवन्ति । न प्राप्नुवन्ति । तेषामप्राधान्यात् । विप्रतिसारावस्थायां हि कौकृत्यलक्षणं चैतसिकं कौकृत्याकारमुद्भूतवृत्तिकम् । अन्ये चित्तचैत्तास्तदाकारेणानुवर्तन्ते । कस्यचिदेव हि धर्मस्य कस्मिंश्चिच्चित्तकलापे प्राधान्यमिति वर्णयन्ति । **शून्यतालम्बनविमोक्षमुखं शून्यतेति** । स्कन्धानामन्तर्व्यापारपुरुषरहितालम्बनं विमोक्षमुखं समाधिविशेष शून्यतेत्युच्यते । विनीलकव्याध्मातकाद्यशुभालम्बनोऽलोभोऽशुभेत्युच्यते । भावनासंबद्धत्वात् स्त्रीलिङ्गनिर्देशोऽशुभा भावनेति । तथेहापि कौकृत्यालम्बनश्चैतसिको धर्म कौकृत्यमिति । **स्थानेन स्थानिनामनिर्देश । सर्वो ग्राम आगत** इति । सभूमिक शालासमुदायो ग्राम· । स्थानिषु मनुष्येष्वागतेषु वक्तारो भवन्ति । सर्वो ग्राम आगत इति । एवं **सर्वो देश आगत** इति । **स्थानभूतं च कौकृत्यं विप्रतिसारस्येति** । विप्रतिसारालम्बनत्वात् । तस्माद्युक्तस्तथा निर्देश । **फले वा हेतूपचार** इति । हेतु कौकृत्यम् । फलं विप्रतिसार । तस्मिन्फले हेतुरुपचर्यते । हेतुवाचकेन शब्देन फलमुच्यत इत्यर्थ । **यथा षडिमानि स्पर्शायतनानि पौराणं कर्मेति** । पूर्वजन्मकृतस्य पौराणस्य कर्मणश्चक्षुरादीनि षट् स्पर्शायतनानि फलानि । तेषु यथा कर्मोपचर्यते । तद्वत् । **यत्तर्ह्यकृतालम्बनं तत्कथं कौकृत्यमिति** । यदकृतं तन्न कृतमिति मत्वा चोदयति । **अकृतेऽपि कृताख्या भवतीति** । अकृतेऽप्यर्थे कृतशब्दप्रयोगो भवति । कथमित्याह । **न साधु मया कृतं यत्तन्न कृतमिति** । कृतमिव तदिति कृत्वा । **यत्कुशलमकृत्वा तप्यत** इति । यत् कुशलं दानादिकमकृत्वा तप्यते पश्चात्तापी भवति तत् कुशलम् । **अकुशलं च कृत्वा** । किम् । तप्यत इत्यधिकृतम् । यच्चाकुशलं प्राणातिपातादिकं कृत्वा तप्यते तदपि कुशलम् । **विपर्ययादकुशलम्** । यदकुशलमकृत्वा तप्यते कुशलं च कृत्वेति । यत्पापमकृत्वा पश्चात्तापी भवति । न साधु मया कृतं यत्तन्न

1 Mss न

कृतमिति। तदकुशलं कौकृत्यम्। यच्च कुशलं दानादिकं कृत्वा पश्चात्तापी भवति। न साधु मया कृतं यद्दानादिकं कृतमिति। तदप्यकुशलम्। **तदेतदुभयमप्युभयाधिष्ठानं भवतीति।** तदेतत्कौकृत्यमुभयमपि कुशलं चाकुशलं चोभयाधिष्ठानं भवति यथोक्तेन विधानेन।

**आवेणिके**

इति। रागादिपृथग्भूत इत्यर्थः।

**दृष्टियुक्ते च**

इति। चशब्दोऽकुशल इत्यनुकर्षणार्थः। **महाभूमिक एव कश्चित्प्रज्ञाविशेषो दृष्टिरिति।** संतीरिका या प्रज्ञा। सा दृष्टिः। सा चेहाकुशला गृह्यते। तस्मादाह **मिथ्यादृष्टिश्चेत्यादि।**

**कौकृत्येनैकविंशतिः**

इति। कौकृत्येन चेति [1]लुप्तनिर्दिष्टश्चकारो द्रष्टव्यः।

**क्लेशैश्चतुर्भिः**

इत्यादिषु प्रत्येकं वाक्यपरिसमाप्तिर्वेदितव्या। न हि रागादयः परस्परेण संप्रयुज्यन्त इत्याभिधार्मिकाः। **स च क्लेश आवेणिकोक्ताश्च विंशतिरिति।** दश [2]महाभूमिकाः षट् क्लेशमहाभूमिकाः। द्वावकुशलमहाभूमिकौ वितर्को विचारश्चेति विंशतिः। स च क्लेशो रागः प्रतिघो मानो विचिकित्सा चेत्येकविंशतिः। एकविंशतिर्भवत्येवेति क्रियावधारणमवगन्तव्यम्। **क्रोधादिभिरपीति।**

क्रोधोपनाहशाठ्येर्ष्याप्रदास-[3]म्रक्षमत्सराः।
मायामदविहिंसाश्च[4]

इति। एभिरपि **संप्रयुक्ते चित्ते एकविंशतिरेव चैतसिकाः।** ते चावेणिकोक्ताः पूर्ववत्। स चोपक्लेशः क्रोधो वा यावद्विहिंसा वेति। **कौकृत्येन च संप्रयुक्ते।** [5]ते च पूर्वोक्तास्तच्च **कौकृत्यमित्येकविंशतिः।** कौकृत्यमपि ह्युपक्लेशः स्वतन्त्रमिष्यते। **समासत आवेणिक** इति विस्तरः। अविद्यामात्रसंयुक्ते **चेतस्यकुशले दृष्टिसंप्रयुक्ते चाकुशले विंशतिः।** **अन्यक्लेशोपक्लेशसंप्रयुक्ते** त्वकुशल एवैकविंशतिः

1 B & To. suggest in f n लुप्तनिर्दिष्टश्चकारो
2 Mss omit महा०
3 Mss प्रह्वास०
4 Kārikā, II 27
5 V reads चेतसि अकुशले for ते च

निवृताव्याकृतमिति। क्लेशाच्छादितं कुशलाकुशलत्वेनाव्याकृतं यत् तन्निवृताव्याकृतम्। अनाच्छादितं त्वनिवृताव्याकृतं विपाकजैर्यापथिकशैल्पस्थानिकनैर्माणिकस्वभावम्। बहिर्देशका अव्याकृतमपि कौकृत्यमिच्छन्तीति। [1]कश्मीरमण्डलाद् ये बहिर्देशस्थितास्ते बहिर्देशकाः। त्रयोदशेति। क्वचिदनिवृताव्याकृते कौकृत्यं त्रयोदशममधिकं प्रक्षिप्य। मिद्धं प्रचलायमानावस्थाया स्वप्नदर्शनावस्थाया वा कुशलाकुशलाव्याकृतत्वादिति। शास्त्रे वचनात्। कथं मिद्धं कुशलं [2]वक्तव्यमकुशलं[2] वक्तव्यमव्याकृतं वक्तव्यमिति। आह। कुशलं वक्तव्यमकुशलं वक्तव्यमव्याकृतं वक्तव्यमिति। यत्र द्वाविंशतिस्तत्र त्रयोविंशतिरिति विस्तर। यत्र द्वाविंशतिश्चैतसिका इत्युक्तं तत्र तन्मिद्धं त्रयोविंशम्। त्रयोविंशते पूरणमित्यर्थं। यत्र त्रयोविंशतिः कौकृत्यमधिकं क्वचिदिति। तत्र तन्मिद्धं चतुर्विंशम्। एवं यावत्

अन्यत्र द्वादशाव्याकृते मताः

मिद्धं त्रयोदशं वक्तव्यम्। बहिर्देशकमतेन तु कौकृत्याधिके चतुर्दश मिद्धं भवतीति योज्यम् ॥२८-३०॥

[ कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः।
ध्यानान्तरे वितर्कश्च विचारश्चाप्यतः परम् ॥३१॥ ]

अतो यथोक्तादिति। अतो यथावर्णिताच्चैत्तसहोत्पादनियमात्। कौकृत्यं मिद्धं च सर्वथा नास्तीति। न कुशलं नाप्यव्याकृतम्। कुत एवाकुशलमिति। सर्वथा मिद्धं कौकृत्यं च नास्ति। शाठ्यमदमायावर्ज्या इति।

माया शाठ्यं च कामाद्यध्यानयोर्ब्रह्मवञ्चनात्[3]
स्त्यानौद्धत्यमदा धातुत्रये[4]

इति वचनात्। एतानि वर्ज्यन्ते तेषां तत्र सद्भावात्। अन्यत्सर्वं तथैवेति। कुशले चित्ते पूर्ववत् द्वाविंशतिः। आवेणिके दृष्टियुक्ते च निवृता-

1 Mss कास्मीर०

2 2 B & To supply this from Tib. C seems to have in the f n a few letters which are illegible

3 Mss ०ब्र्ह्मचर्यैव०

4 Kārikā, V 53

व्याकृतेऽष्टादश कामधातुवत्। रागमानविचिकित्सान्यक्लेशसंप्रयुक्ते मायाशाठ्यमदोपक्लेशसंप्रयुक्ते च एकान्नविंशतिः। ते च स च क्लेश उपक्लेशो वा तत्रैकान्नविंशो भवति। अनिवृताव्याकृते विपाकजैर्यापथिकनैर्माणिके पूर्ववत् द्वादश।

ध्यानान्तरे वितर्कश्च

इति। कौकृत्यमिद्धाकुशलानि चेति चशब्दः। किम्। न सन्तीत्यविकृतम्। शेषं तथैव वितर्कन्यूनं यथा प्रतिषिद्धं नास्तीति। कौकृत्यमिद्धाकुशलवितर्का न सन्तीत्यर्थः। विचारश्च मायाशाठ्ये चेत्यपिशब्दादिति। विचारश्चेति एतावति वक्तव्ये

विचारश्चापि

इत्यपिशब्दाधिक्यादर्थाधिक्यमिति। मायाशाठ्यमपि तत्र नास्तीत्ययमपरार्थो लभ्यते। मदस्तु नापारयते।

स्त्यानौद्धत्यमदा धातुत्रये[1]

इति वचनसामर्थ्यात्। शेषं तथैवेति। कुशले वितर्कविचारनिर्मुक्ता विंशतिः। आवेणिके दृष्टियुक्ते षोडश। रागादिक्लेशसंप्रयुक्ते मदोपक्लेशसंप्रयुक्ते च सप्तदश। दश महाभूमिकाः षट् क्लेशमहाभूमिकाः। स च क्लेशः स वोपक्लेशः[2]। अनिवृताव्याकृते दश महाभूमिका य[3] एवेति गमनीयम्[4]। ब्रह्मणो हि यावच्छाठ्यमिति विस्तरः। तत्र शाठ्यपूर्वकत्वान्मायापि गृहीता भवति। पर्षत्संबन्धान्नोर्ध्वमिति। येषां पर्षदस्ति तेषां पर्षद्ग्रहणार्थं मायाशाठ्ये प्रवर्तेते। अष्टौ पर्षदः पठ्यन्ते। क्षत्रियपर्षद्ब्राह्मणपर्षद्गृहपतिपर्षच्छ्रमणपर्षच्चातुर्महाराजिकपर्षत्त्रयस्त्रिंशत्पर्षन्मारपर्षद्ब्रह्मपर्षत्। तासामन्यतमाऽपि[5] ऊर्ध्वमतो नास्तीति मायाशाठ्याभावः। ब्रह्मणस्तु पर्षदस्ति। तस्मादाह। स हि स्वस्यां पर्षदि निषण्णोऽश्वजिता भिक्षुणा ब्रह्मलोकगतेन प्रश्नं पृष्टः। कुत्रेमानि चत्वारि महाभूतान्यपरिशेषं निरुध्यन्त इति। अप्रजानन्नान्यधातौ चत्वारि महाभूतान्यशेषं निरुध्यन्त इत्यनवबुध्यमानः विक्षेपं कथाप्रकरणमकार्षीत्। अहमस्मि ब्रह्मेति विस्तरः। ब्रह्मेत्युक्ते महा-

---

1 Kārikā, V, 53

2 Mss. चोप०

3 B & To following Tib, omit य

4 B गणनीयम्

5 B & To ०तमोपि

ब्रह्मे ति वचनं ब्रह्मान्तरेभ्य आत्मनो विशिष्टत्वप्रदर्शनार्थम्। ईश्वर ईशनशीलः कर्ता निर्माता स्रष्टा सृज[1] इति पर्याया उत्तरोत्तरव्याख्यायोगो वा। पितेव पितृभूत। केषाम्, भावानाम् ॥३१॥

[ अह्रीरगुरुतावद्ये भयादर्शित्वमत्रपा।
प्रेम श्रद्धा गुरुत्वं ह्रीरुभय कामरूप्ययोः ॥३२॥ ]

उक्तमेतदिति विस्तर। या भूमिर्यच्चित्तं यावन्तश्च चैत्ताः, सा भूमिस्तच्चित्त तावन्तश्च चैत्ता इत्युक्तमेतत्। तत्र विहितमिति। शास्त्रे विहितम्। स एव चात्रार्थ। गुणेषु गुणवत्सु चेति। तत्र विहितमिति केचित्पठन्ति। स्वपरसान्तानिकेषु मैत्रीकरुणादिषु। गुणेषु गुणवत्सु च पुद्गलेष्वाचारगोचरगौरवादिसपन्नेषु। यद्योगाद्गौरवं न करोत्यसावगौरवता। नास्ति गौरवमस्येत्यगौरव, तद्भावोऽगौरवता, चैतसिकविशेष। कोऽगाविति पर्यायावाहु, अप्रतीशता अभयवशवर्तितेति। शिष्य प्रति इष्ट इति प्रतीशी गुरुस्थानीय, नास्ति प्रतीशोऽस्येत्यप्रतीश, तद्भावोऽप्रतीशता। भावाभिधानेन चैत्तो गृह्यते। भय नाम मानसश्चैत्तो धर्म। भयेन वशे वर्तितु शीलमस्येति भयवशवर्ती, न भयवशवर्ती अभयवशवर्ती, तद्भावोऽभयवशवर्तिता। तदेव चाह्रीक्यम्। नास्ति ह्रीरस्येत्यह्रीकः, तद्भाव आह्रीक्यम्। स च गौरवप्रतिद्वन्द्वो धर्मः, न तदभावमात्रम्।

अवद्ये भयादर्शित्वमत्रपा

इति। अवाच्यमवद्यम्। अतश्चाह, अवद्यं नाम यद्गर्हितं सद्भिरिति। तत्राभयदर्शिता अनपत्राप्यमिति। अवद्ये ऽनिष्टफलादर्शितेत्यर्थः। भीयतेऽस्मादिति। अत्र भयशब्दोऽपादानसाधन। तस्माद्भयशब्देन अनिष्टं फलमुच्यते। अभयस्य दर्शनमभयदर्शितेति विस्तरः। यदि तावदेवं क्रियेत, न भयमभयम्, अभय द्रष्टुं शीलमस्येत्यभयदर्शी, तद्भावोऽभयदर्शितेति प्रज्ञा विज्ञास्यते। [2]प्रज्ञया ह्यभयं पश्यति। अथ पुनरेवं क्रियेत[3], भयं द्रष्टुं शीलमस्येति भयदर्शी, न भयदर्शी अभयदर्शी, [4]तद्भावोऽभयदर्शिता[4]। अभयदर्शितेत्यविद्या विज्ञास्यते। तथा ह्यविद्यायोगाद्भयं न पश्यति। ननु

1 V सृत

2 A प्रज्ञा या हि भय पश्यति

3 Mss क्रियते

4 4 A भयदर्शिता न भयदर्शिता, C तद्भाव: भयदर्शिता न भयदर्शिता।

हि दर्शनं दर्शितेति विस्तर.। न प्रज्ञा नाप्यविद्या। किं तर्हि ' तयोः प्रज्ञाविद्ययोर्यो निमित्तमुपक्लेशस्तदभयदर्शनम्। तच्चानपत्राप्यमिति। अपत्रपते[1]ऽनेनेत्यपत्राप्यम्। [2]कृत्यल्युटो बहुलमिति करणे ण्यत्प्रत्यय। न अपत्राप्यमनपत्राप्यमिति।

[3]ह्री लज्जायां [4]त्रपूष लज्जायामित्येकार्थयोरनयोर्धात्वो कथमर्थान्तरे वाचकत्वमित्यपरितुष्यन्तोऽन्ये पुनराहुः ' आत्मापेक्षयेति विस्तर। एवमपि द्वे अपेक्षे युगपत्कथं सेत्स्यत इति। अस्मिन्नपि पक्षे युगपदपेक्षाद्वयासंभव इति पश्यश्चोदक आह। एवमपीति। अपिशब्देनायमपि पक्षो दुष्यतीत्यभिप्राय। आह्रीक्यमनपत्राप्यं चैकस्मिंश्चित्ते कथं भवत इति मत्वा चोदयति ' द्वे अपेक्षे युगपत्कथं सेत्स्यत इति। न खल्वुच्यते युगपदात्मानं परं चापेक्ष्य इति विस्तरः। पर्यायेण वृत्तिमनयोर्दर्शयति। कस्यचिद्धि दोषैरात्मानमपेक्षमाणस्यापि न प्रवर्तते लज्जा। कस्यचित्परमपेक्षमाणस्येति। विपर्ययेण ह्रीरपत्राप्यं चेति विस्तर.। प्रथमेन तावत्कल्पेन

अह्रीरगुरुतावद्ये भयादर्शित्वमत्रपा

इत्येनेन। सगौरवतेति विस्तरेण भयदर्शिता अपत्राप्यमिति। भयदर्शितानिमित्तमपत्राप्यमित्यर्थ.। द्वितीयेन कल्पेन आत्मापेक्षया दोषैरलज्जनमाह्रीक्यं परापेक्षयानपत्राप्यमित्यनेन आत्मापेक्षया दोषैर्लज्जनं ह्रीः। परापेक्षयापत्राप्यमिति। एवमपि द्वे अपेक्षे इति विस्तरेण चोद्यपरिहारौ वक्तव्यौ।

प्रेमगौरवयोरेकत्वं मन्यन्ते केचित्। तस्मादनयोर्नानाकरणप्रदर्शनार्थमाह '

प्रेम श्रद्धा

इति। प्रेमैव श्रद्धा न गौरवम्। न तु श्रद्धैव प्रेम। तेनाह ' द्विविधं हि प्रेम क्लिष्टमक्लिष्टं' चेत्यादि। स्याच्छ्रद्धा न प्रेमेति चतुष्कोटिकः। दुःखसमुदयसत्ययोः श्रद्धैवाभिसंप्रत्ययरूपा[5]। न प्रेम अस्पृहणीयत्वात्। स्यात्प्रेम न श्रद्धेति। प्रियतारूपा तृष्णा नाभिसंप्रत्ययरूपेति श्रद्धा न भवति। उभयं श्रद्धा च प्रेम च। अभिसंप्रत्ययरूपत्वात्स्पृहणीयत्वाच्च निरोधमार्गसत्ययोस्तदुभयात्मकं भवतीत्यर्थ.। नोभयमेतानाकारान् स्थापयित्वेति। अन्ये चैतसिका वेदनादयो विप्रयुक्तादयश्च। एवं धर्मालम्बनस्य प्रेम्णः श्रद्धायाश्च[6] चतुष्कोटिकं कृत्वा पुद्गलालम्बनस्य चतुष्कोटिकं

1 Mss ०त्यनेन
2 Pā., III 3 113
3 Dhā , I 399
4 Dhā , III. 3
5 Mss. ०प्रत्यक्ष०
6 Mss. omit च

करोति । पुद्गलेष्विति विस्तर । तत्र सार्धं विहरन्तीति सार्धविहारिणः शिष्या । ये प्रव्रजिता गुरोरन्ते वसन्तीत्यन्तेवासिनो निश्रयाध्ययनसंबन्धिन । तेषु पुत्रादिषु प्रेम न गौरवं क्लिष्टमक्लिष्टं चेति संभवत । गौरवं न प्रेम ।

गुरुत्वं ह्री

इति वक्ष्यमाणलक्षणं गौरवं न प्रेम गौरवस्थानत्वात् । उभयम् प्रेम गौरवं च तदुभयात्मकं भवतीत्यर्थ । नोभयमेतानाकारान् स्थापयित्वा । योऽन्यो जनो ऽसंबद्धो निर्गुण तत्र न प्रेम न गौरवमिति । तत्पूर्विका च प्रियता प्रेमेति । गुणसंभावनापूर्विका प्रियता तच्च प्रेम । तस्मान्न सैव श्रद्धा प्रेमेत्याचार्यः ।

गुरुत्वं ह्रीः

इति । यथोक्ता ह्री· सगौरवता सप्रतीशता सभयवशवर्तितेत्युक्ता । या ह्री-स्तद्गौरवम् । तदेवं प्रेम श्रद्धालक्षणं भवति । ह्रीलक्षणं तु गौरवमित्युक्तं तयोर्नानाकरणम् । एव सप्रतीशतापीति । एवं ह्रीरपि । धर्मेषु च पुद्गलेषु च । ये पुद्गलालम्बने श्रद्धाह्रियौ ते तत्र न स्त इति । पुद्गलालम्बने श्रद्धाह्रियावधिक्रियेते[1] ययोरैक्यं मन्यन्ते । [2]ते आरूप्यधातौ[2] न स्त । कामरूप्यधात्वोरेव भवत इत्युक्तम् ॥३२॥

[ वितर्कविचारौदार्यसूक्ष्मते मान उन्नतिः ।
मदः स्वधर्मे रक्तस्य पर्यादानं तु चेतसः ॥३३॥]

कथं पुनरनयोरेकत्र चित्ते योग इति । न हि तदेव चित्तं तद्योगादौदारिकं च सूक्ष्म च युज्यते विप्रतिषेधात् । निष्ठ्यूतमिति नि·पूर्वस्य [3]ष्ठीवतेर्निष्ठाया-मेतद्रूपं निष्ठ्यूतम् निरस्तमित्यर्थ. । नातिश्यायते नातिघनीभवति । नातिविलीयते नातिद्रवीभवति । नातिसूक्ष्मं भवति नात्यौदारिकमिति । मध्यमावस्थमित्यर्थ । एवं तर्हि निमित्तभूताविति विस्तर. । यथोदकातपौ सर्पिषः श्यानत्वविलीनत्वयोर्निमित्तभूतौ न तु पुनस्तत्स्वभावौ श्यानत्वविलीनत्वस्वभावौ । एवं वितर्कविचारौ चित्तस्यौदारिकतासूक्ष्मतयोर्निमित्तभूतौ न तु पुनरौदारिकसूक्ष्मतास्वभावाविति । अत एवं वक्तव्यम् चित्तौदारिकताहेतुर्वितर्कः चित्तसूक्ष्मताहेतुर्विचार इति । ब्रूयास्त्वमभ्युपगमाददोष एष· इति । तत इदं दोषान्तरमाह आपेक्षिकी चौदारिकसूक्ष्मतेति विस्तरः । भूमिप्रकारभेदात् ।

---

1 Mss ०क्रियते 2 2 Mss चारूप्यधातौ
3 To. ष्ठीवते निष्ठाया०

भूमिभेदात्प्रकारभेदाच्च । भूमिभेदात्तावत् प्रथमध्यानमपेक्ष्य कामधातुरौदारिको महाभिसंस्कारतरत्वात् । कामधातुमपेक्ष्य प्रथमं ध्यानं सूक्ष्ममल्पाभिसंस्कारतरत्वात् प्रशान्तमिति । तदेव पुनर्द्वितीयं ध्यानमपेक्ष्यौदारिकम् । एवं **यावद्भवाग्रं सूक्ष्मम्** । प्रकारभेदादपि तस्यामेव भूमावापेक्षिक्यावौदारिकसूक्ष्मते । तद्यथा य एव ते त्रयः क्लेशानां मूलप्रकारा मृदुमध्याधिमात्रा गुणानां च । कामधातौ यावद्भवाग्रे तेषामधिमात्रः क्लेश औदारिकः । मृदुः सूक्ष्मः । क्लेशविपर्ययेण गुणानामिति । एवं भूमिप्रकारभेदेनापेक्षिक्यावौदारिकसूक्ष्मते इति **आभवाग्रादौदारिकसूक्ष्मते ध्यानाम्** । अनिष्टं चैतत् । वितर्कविचारयोः कामधातुप्रथमध्यानभूमिकत्वादिति । **न चौदारिकसूक्ष्मतया जातिभेदो युक्त** इति । वितर्कविचारयोर्जातिभेद इष्यते । अन्यो वितर्कोऽन्यो विचार इति । न चौदारिकत्वेन सूक्ष्मत्वेन **च वितर्कविचारयोर्यथाक्रमं स्वभावभेदो युक्तः** । किं कारणम् । जातिभिन्नयोर्हि वेदनासंज्ञयोरौदारिकसूक्ष्मता भवति । न च पुनरौदारिकसूक्ष्मतयैव तयोः स्वभावभेदः । किं तर्हि । अनुभवलक्षणतया निमित्तोद्ग्रहणलक्षणतया च तयोः स्वभावभेदः । तस्मादप्यनयोर्नास्ति लक्षणम् । **अन्ये पुनराहुरिति** सौत्रान्तिकाः । **वाक्संस्कारा** इति । वाक्समुत्थापका इत्यर्थः । **वितर्क्य विचार्य वाचं भाषते नावितर्क्य नाविचार्येति**[1] । वितर्कविचारैरेवं चैवं च भाषिष्य इति । **तत्र ये औदारिकास्ते वितर्का** वाक्संस्काराः । कर्मणा स्वभावो द्योतितो न शक्यमन्यथा स्वलक्षणं प्रदर्शयितुमिति । **एवं सूक्ष्मास्ते विचारा** । एतस्यां कल्पनायां समुदायरूपा वितर्कविचारा पर्यायभाविनश्च भवन्ति । चित्तचैत्तकलापस्य वाक्समुत्थापकत्वात् । कथं पुनरनयोरेकत्र चित्ते योग इत्युक्तम् । अतो वैभाषिक आह । **यदि चैकत्र चित्तेऽन्यो धर्म औदारिक** इति विस्तरः । एकत्र चित्ते वितर्क औदारिकस्वभावोऽन्यो धर्मः । विचारस्तु सूक्ष्मस्वभावोऽपरः । तौ च यथाक्रमं चित्तौदारिकतासूक्ष्मताहेतुत्वाच्चित्तौदारिकतासूक्ष्मतेत्युच्यते । अथ वा [2]चित्तस्यौदारिकश्चित्तौदारिकः[2] । चित्तौदारिकभावश्चित्तौदारिकता । एवं चित्तसूक्ष्मतापि वक्तव्येति **कोऽत्र विरोधः** । **न स्याद्विरोधो यदि वितर्कविचारयोर्जातिभेदः स्याद्वेदनासंज्ञावत्** । वेदना ह्यौदारिकी । संज्ञा सूक्ष्मा । तयोस्तु जातिभेदोऽस्तीति । औदारिकसूक्ष्मतायामप्येकत्र चित्ते न विरोधः ।

---

1 Mss add वितर्क्य विचार्येति. 2 2 A & C चित्तौदारिकः चित्तौदारिक:, V simply चित्तौदारिकः

एकस्या तु जातावनवधृतलक्षणायामैक्येन च कैश्चिद्गृहीताया मृद्वधिमात्रता औदारिकसूक्ष्मतालक्षणा युगपन्न [1]संभवतीत्यर्थादयुगपत् संभवतीत्युक्तम्। तथा हि वेदना अन्यो वा धर्मः पर्यायेण मृदुतामधिमात्रता च भजते। नैवं व्यक्तो भवति। किम्। जातिभेद। कस्मात्। प्रत्येक जातीना मृद्वधिमात्रत्वात्। वेदना ह्यौदारिकी भवति सूक्ष्मा वापेक्षाभेदात्। कथमिति। वेदना संज्ञामपेक्ष्यौदारिकी। रूपमपेक्ष्य सूक्ष्मा। तथा संज्ञा संस्कारानपेक्ष्यौदारिकी। वेदनामपेक्ष्य सूक्ष्मा। वितर्कविचारवदेव वा। भवतोऽपि हि कामावचरौ वितर्कविचारावौदारिकौ प्रथमध्यानभूमिकौ सूक्ष्मौ। ध्यानान्तरे च विचार सूक्ष्मतर इति। तदेवं प्रत्येकं जातीना मृद्वधिमात्रत्वान्नैवं व्यक्तो भवति। न मृद्वधिमात्रतया जातिभेदो व्यक्तो भवतीत्यर्थ। अत्र [2]संघभद्र आचार्य[2] आह। एकत्र च चित्ते औदारिकसूक्ष्मते भवत। न च विरोध प्रभावकालान्यत्वात्। यदा हि चित्तचैत्तकलापे वितर्क उद्भूतवृत्तिर्भवति। तदा चित्तमौदारिक भवति। यदा[3] विचारस्तदा सूक्ष्मम्। रागमोहचरितव्यपदेशवत्। रागमोहयौगपद्येऽपि हि तयोरन्यतरोद्भूतवृत्तियोगाद् रागचरितो मोहचरित इति वा व्यपदिश्यते। तद्वदिहापि द्रष्टव्यमिति। अत्र वयं ब्रूमः। भवति कस्मिंश्चित्कलापे कस्यचिद्धर्मस्योद्भूतवृत्तित्वम्। किं त्वनयोर्न लक्षणं विवेचितमिति। न किञ्चिदेतत्। ननु च चित्तौदारिकतासूक्ष्मतालक्षणौ वितर्कविचारावुक्तौ। सत्यमुक्तौ। प्रत्येकं तु जातीनामौदारिकसूक्ष्मते इति तावौदारिकसूक्ष्मतालक्षणौ भवितुमर्हतो यथोक्तमिति नैतदस्मानाराधयति। नैव हि वितर्कविचारावेकत्र चित्ते भवत इत्यपर इत्याचार्यमतम्। अस्मिन्मते यथोक्तदोषप्रसङ्गो न भवति। कस्त्वनयो पर्यायवर्तिनोर्विशेषः। अत्र पूर्वाचार्या आहुः। वितर्क कतम। चेतनां वा निश्रित्य प्रज्ञा वा पर्येषको मनोजल्पोऽनभ्यूहाभ्यूहावस्थयोर्यथाक्रमं सा च चित्तस्यौदारिकता। विचार कतमः। चेतना वा निश्रित्य प्रज्ञा वा प्रत्यवेक्षको मनोजल्पोऽ[4]नभ्यूहाभ्यूहावस्थयोर्यथाक्रमम्। सा च चित्तसूक्ष्मतेति[5]। अस्मिन्पक्षे वितर्कविचारावेकस्वभावौ समुदायरूपौ पर्यायवर्तिनौ पर्येषणप्रत्यवेक्षणाकारमात्रेण भिन्नाविष्येते[6]। तत्रोदाहरणं केचिदाचक्षते।

1 To संभवतीत्य०  2.2 To संघभद्राचार्य

3 Mss. & B यद्दि

4 A & C अनव्यूहाभ्यूहावस्थ०, V अनव्यूहावस्थ०

5 Mss omit इति.  6 Mss ०विष्यति

तद्यथा बहुषु घटेष्ववस्थितेषु को ऽत्र दृढः को जर्जर इति मुष्टिनाभिघ्नतो य ऊह स वितर्क । इयन्तो जर्जरा दृढा वेति यदन्ते ग्रहणं स विचार इति । कथमिदानीं प्रथमं ध्यानं पञ्चाङ्गमिति विस्तर । विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरतीति सूत्रे पञ्चाङ्गमुक्तम् । तत्कथम् । भूमितस्तत्पञ्चाङ्गमुक्तं न क्षणत इति । प्रथमध्यानभूमि कदाचिद्वितर्केण व्यवकीर्णा । कदाचिद्विचारेण । तदेवं सन्तानमधिकृत्य पञ्चाङ्गमुक्तम् । न क्षणमधिकृत्येत्यदोषः ।

**येन केनचित्परतो विशेषपरिकल्पेनेति ।** भूतेनाभूतेन वा परत उत्कर्षपरिकल्पेन शूरोऽर्थवानस्मि शीलवान् बुद्धिसंपन्न इति वा या चेतस उन्नतिः स मानो नाम चैतसिको धर्म. ।

**पर्यादानं तु चेतसः**

इति तुशब्दो विशेषणार्थो भिन्नक्रमश्चावगन्तव्यः । अत एवाह । **मदस्तु स्वधर्मेष्वेव रक्तस्येति**[1] विस्तरः । **चेतसः पर्यादानमिति ।** येन स्वधर्मेष्वेव रूपशौर्यादिषु[2] रक्तं चेतः पर्यादीयते संनिरुध्यते स रागनिष्यन्दो मद. । य. स्वधर्मेष्वेव रक्तस्य [3]दर्पचेतसः पर्यादानात्कुशलधर्मक्रियाभ्य. प्रतिसंहारो[3] मद इत्याचार्यसंघभद्र. । **संप्रहर्षविशेषो मद इति ।** क्लिष्टसौमनस्यमभिप्रेतम् । तदेतन्नेच्छन्ति वैभाषिका. । यस्मात्सौमनस्यमा द्वितीयाद्ध्यानात् । मदश्च त्रैधातुक.

स्त्यानौद्धत्यमदा धातुत्रये[4]

इति वचनात् ॥३३॥

**[चित्तं मनोऽथ विज्ञानमेकार्थं चित्तचैतसा. ।**
**साश्रयालम्बनाकाराः संप्रयुक्ताश्च पञ्चधा ॥३४॥]**

**उक्ता सह चित्तेन चैत्ता. प्रकारेणेति ।** चित्तं तावत्प्रकारेणोक्तं

विज्ञानं प्रतिविज्ञप्तिः[5]

---

1 Mss. omit इति.
2 Mss ०सौन्दर्यादिषु
3 3 C दर्प चेतस: पर्यादान कुशलान्यक्रियाभ्यु प्रतिसहार: , A ०कुशलान्यक्रियाभ्यु-प्रति० , V कुशलान्यकें वात्मप्रति०
4 Kārika, V 53.
5 Kārikā, I. 16.

इत्येवमादिना[1]स्वलक्षणस्कन्धधात्वायतनकुशलादिप्रभेदेन[2]। चैत्ता अपि स्वलक्षणपरस्परविशेषेण[3] चित्तसंख्यावधारणकामप्रथमध्यानादिभूमिप्रभेदेन

एकार्थम्

इति। यच्चित्तं तदेव मनस्तदेव विज्ञानमित्येकोऽर्थोऽस्येत्येकार्थम्। निर्वचनभेदस्तूच्यते। चिनोतीति चित्तमिति। कुशलमकुशलं वा चिनोतीत्यर्थः। नैरुक्तेन विधिनैवं[4] सिद्धम्। मनुत इति मनः। मन ज्ञान इत्यस्य औणादिकप्रत्ययात्तस्यैतद्रूपं मन इति। विजानात्यालम्बनमिति विज्ञानम्। कर्तरि ल्युट्। चितं शुभाशुभैर्धातुभिरिति चित्तम्। [5]वासनासंनिवेशयोगेन सौत्रान्तिकमतेन योगाचारमतेन वा। आश्रयभूतं मन आश्रितभूतं विज्ञानमिति। आश्रयभावापेक्षं मनः।

षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मन[6]

इत्यर्थपरिग्रहात्[7]। आश्रितभावापेक्षं विज्ञानम्। द्वयं प्रतीत्य विज्ञानस्योत्पत्तिरिति वचनात्

चित्तचैतसाः।

[8]साश्रयालम्बनाकाराः संप्रयुक्ताश्च

इति। चशब्द एकानुकर्षणार्थः। य एव हि चित्तचैत्ता इत्यनेन शब्देनाभिहितास्त एव साश्रया इत्यनेनापि शब्देनाभिधीयन्ते। एवं सालम्बनाः साकाराः संप्रयुक्ताश्च। तत्र साश्रया इन्द्रियाश्रितत्वात् षडायतनाश्रितत्वादित्यर्थः। सालम्बना[9] विषयग्रहणात्। न हि विनालम्बनेन चित्तचैत्ता उत्पद्यन्ते। साकाराः तस्यैवालम्बनस्य प्रकारेणाकारणात्[10]। येन ते सालम्बनाः तस्यैवालम्बनस्य प्रकारेण[11] ग्रहणात्। कथम्। विज्ञानं हि नीलं [12]पीतं वा वस्तु विजानाति उपलभत इत्यर्थः। तदेव [13]तथालम्बनं वस्तु वेदनानुभवति। संज्ञा परिच्छिनत्ति। चेतनाभिसंस्करोतीत्येवमादि। अथ वा तस्यैवालम्बनस्य विज्ञानं सामान्यरूपेणोपलभ्यतारूपं गृह्णाति। विशेषरूपेण तु वेदनानुभवनीयतारूपं

---

1 Mss स लक्षण०
2 Mss ०यतन कुशलादिप्र०
3 Mss ०विशेष
4 Mss नैव
5 Mss भावना०
6 Kārikā, I 17
7 V ०निग्रहात्
8 Mss आश्रया
9 Mss सालम्बन
10 Mss प्रकारणाकरणात्
11 Mss ०कारणे
12 V. नीलपीते
13 Mss तदा०

गृह्णाति। संज्ञा परिच्छेद्यतारूपं गृह्णातीत्येवमादि। **संप्रयुक्ता. समं प्रयुक्तत्वा-दिति।** समा अविप्रयुक्ताश्चान्योन्यमिति संप्रयुक्ता। **आश्रयालम्बनाकारकाल-द्रव्यसमताभिरिति।** येनाश्रयेण चित्तमुत्पद्यते। तेनैवाश्रयेण वेदनासंज्ञाचेतनादय उत्पद्यन्ते। तथा येनालम्बनेन चित्तम्। तेनैव वेदनादय। येनाकारेण चित्तम्। तेनैव वेदनादयः। यदि हि नीलाकारं चित्तम्। नीलाकारा एव तत्संप्रयुक्ता वेदना-दय उत्पद्यन्ते। यस्मिंश्च काले चित्तम्। तस्मिन्नेव वेदनादय। यथा च चित्तद्रव्य-मेकमेवोत्पद्यते। न द्वे त्रीणि वा। तथा वेदनाद्रव्यमेकमेवोत्पद्यते। न द्वे त्रीणि वा। तथा संज्ञाद्रव्यं चेतनाद्रव्यमित्येवमादि। तेनेदमेवान्त्यं दुर्गममिति व्याचष्टे। **यथैव ह्येकं चित्तम्। एवं चैत्ता अपि एकैका इति** ॥३४॥

**[विप्रयुक्तास्तु संस्काराः प्राप्त्यप्राप्तिसभागता।**
**आसंज्ञिकसमापत्ती जीवितं लक्षणान्यपि ॥३५॥**
**नामकायादयश्चेति]**

विप्रयुक्तान् वक्तुकाम आचार्य उपोद्घातं करोति। **निर्दिष्टाश्चित्तचैत्ताः सवि-स्तरप्रभेदाः।** विप्रयुक्तास्त्ववसरप्राप्ता इदानीमुच्यन्त इत्यभिप्राय। सविस्तर-प्रभेदा इति। विस्तरश्च प्रभेदश्च विस्तरप्रभेदौ। सह विस्तरप्रभेदाभ्या सविस्तर-प्रभेदाः। अथ वा विस्तरेण प्रभेद. विस्तरप्रभेद। सह विस्तरप्रभेदेन सविस्तर प्रभेदा। तत्र चित्तं तावत् सविस्तरप्रभेदं[1] निर्दिष्टम्

विज्ञानं प्रतिविज्ञप्तिर्मनआयतनं च[2]

इत्येवमादिना। चैत्ता अपि

वेदनानुभव[3]

इत्यारभ्य यावत्

पञ्चधा चैत्ता[4]

इति विस्तरेण।

**नामकायादयश्च**

इति। [5]चशब्द एवंजातीयकानुक्तविप्रयुक्तप्रदर्शनार्थः। संघभेदप्रभृतयो हि द्रव्यतश्चित्तविप्रयुक्ता इष्यन्त इति। येऽप्येवंजातीयका इति शास्त्रेऽप्युक्तत्वात्। चित्तविप्रयुक्ता इति चित्तग्रहणं चित्तसमानजातीयप्रदर्शनार्थम्। चित्तमिव चित्तेन

---

1 Mss. प्रभेदेन
2 Kārikā, I 16.
3 Kārikā, I 14
4 Kārikā, II 23
5 Mss. इति शब्द

च विप्रयुक्ता इत्यर्थः । किं च तेषां चित्तेन समानजातीयत्वम् । यदरूपिणोऽमी भवन्ति । रूपित्वादेव हि विप्रयुक्तत्वेऽपि रूपं न विप्रयुक्तत्वे[1] नाम लभते । यद्वामीषां नामरूपमिति नामत्वम् । तत्तेषां चित्तेन समानजातीयत्वम् । चैत्ता अपि चित्तेन तुल्यजातीयाः । ते तु चित्तेन सहालम्बने संप्रयुक्ता । तद्विशेषणार्थं विप्रयुक्तग्रहणम् । असंस्कृतमपि तत्समानजातीयमनालम्बनत्वेनेति तत्परिहारार्थं संस्कारग्रहणम् । अत एवाह । **इमे संस्कारा न चित्तेन संप्रयुक्ताः । न च रूपस्वभावा इति चित्तविप्रयुक्ता उच्यन्त इति ॥**

**[ प्राप्तिर्लाभः समन्वयः ।**

**प्राप्त्यप्राप्ती स्वसन्तानपतितानां निरोधयोः ।३६।।]**

तत्रेति वाक्योपन्यासे निर्धारणे वा । तावच्छब्दः क्रमे ।

**प्राप्तिर्लाभः समन्वयः**

इति । प्राप्तिरिति सामान्यसंज्ञा । लाभः समन्वय इति विशेषसंज्ञा । लाभः प्रतिलम्भ [2]इत्येकार्थः । समन्वयः समन्वागम इत्यनर्थान्तरम् । प्रतिलम्भ इत्युक्ते समन्वागमस्याग्रहणम् । समन्वागम इत्युक्ते प्रतिलम्भस्याग्रहणम् । प्राप्तिरित्युक्ते तूभयोर्ग्रहणम्[3] । अत एवाह । **द्विविधा हि प्राप्तिरप्राप्तविहीनस्य च प्रतिलम्भः प्रतिलब्धेन [4]च समन्वागम** इति । अप्राप्तं च विहीनं चाप्राप्तविहीनम् । तस्याप्राप्तविहीनस्य प्रतिलम्भः । अप्राप्तस्य तद्यथा दुःखे धर्मज्ञानक्षान्तेः । विहीनस्य तद्यथा कामावचरस्य कामवैराग्येण त्यक्तस्य धातुप्रत्यागमनात् परिहाण्या वा पुनःप्रतिलम्भः । प्रतिलब्धेन च द्वितीयादिषु क्षणेषु समन्वागमः । तस्याः समनुवर्तनात् । यश्च प्रतिलम्भो यश्च समन्वागमः । सा द्विधा प्राप्तिरिति प्रतिलम्भे समन्वागमे च प्राप्तिशब्दो वर्तते । अभेदविवक्षाया तु प्राप्तिः प्रतिलम्भः समन्वागम इत्येक एवार्थः । तथा हि प्रथमे क्षणे दुःखे धर्मज्ञानक्षान्ते प्राप्तिः प्रतिलम्भ इष्यते । सापि समन्वागम इत्युच्यते । प्रथमक्षणस्थ आर्यपुद्गलो दुःखे धर्मज्ञानक्षान्त्या समन्वागत इत्युच्यते ।

आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः[5]

इत्यादिवचनात् । कथमयं लक्षणनिर्देशः । न हि भेदविवक्षायामपि पर्याय-

---

1 Mss विप्रयुक्तत्व
2 B & To इत्येकोऽर्थः
3 A & C °भयाद्ग्रहण
4 Mss omit च.
5 Kārikā, II 19.

वचनेन लक्षणनिर्देशः कल्पते । प्राप्तिः[1] कतमा । य प्रतिलम्भो य समन्वागम इति । पर्यायवचनमपि कदाचित् लक्षणाय कल्पते । अनलो जातवेदा अग्निरिति । सूत्रेऽप्युक्तम् । अविद्या कतमा । [2]यत्पूर्वान्ते अज्ञानमपरान्त अज्ञानमिति विस्तरः । [3]विपर्ययादप्राप्तिरिति सिद्धमिति । विपर्ययादेवाप्राप्तिरिति सिद्धे [4]नैतदर्थं सूत्रं कर्तव्यमित्यभिप्राय । अप्राप्तिरप्रतिलम्भोऽसमन्वागम इति विपर्ययादेतत्त्रयं गम्यते । तथैव चाप्रतिलम्भासमन्वागमयोरप्राप्तिरिति सामान्यसंज्ञा । तस्मादेवं [5]च वक्तव्यम् । द्विविधा अप्राप्तिरप्राप्तपूर्वाणामप्रतिलम्भ प्राप्तविहीनानामसमन्वागम इति । अथ वाप्रतिलब्धस्य विहीनस्य चाद्याप्राप्तिरप्रतिलम्भः । अप्रतिलब्धेन विहीनेन च द्वितीयादिषु [6]क्षणेष्वसमन्वागम इति ।

**प्राप्त्यप्राप्ती स्वसन्तानपतितानाम्**

इति । संस्कृतानां प्राप्त्यप्राप्ती स्वसन्तानपतितानामेवेत्यवधार्यते । **न परसन्तानपतितानामिति** । न परसत्त्वसन्ततिपतितानां धर्माणां स्वसन्ततौ प्राप्त्यप्राप्ती भवत इत्यर्थः । तेनाह । **न हि परकीयैः कश्चित्समन्वागत** इति । **नाप्यसन्ततिपतितानामिति** । नासत्त्वसन्ततिपतितानामित्यर्थः । तस्मादाह । **न ह्यसत्त्वसंख्यातैः कश्चित्समन्वागत** इति । माल्याभरणादयः काष्ठकुड्यादिगताश्च रूपादयोऽसत्त्वसंख्याताः । चक्षुरादयः सत्त्वसंख्याताः । केशादयो रूपीन्द्रियसंबद्धाः सत्त्वसंख्याता एव वेदितव्याः । तदनुग्रहोपघातपरिणामानुविधानात् । तथा हि रूपीन्द्रियोपघातात् पालित्यादिविकार केशादीनां दृश्यते । रसायनोपयोगेन चानुग्रहात्पालित्यादिप्रत्यापत्तिरिति सर्वेषां सत्त्वसंख्यातानां प्राप्तिर्भवतीति सिद्धान्तः ।

**निरोधयोः**

इति [7]प्रतिसंख्याप्रतिसंख्यानिरोधयोरसत्त्वसंख्यातयोरपि प्राप्त्यप्राप्ती भवत । **सर्वसत्त्वा अप्रतिसंख्यानिरोधेन** यथा प्रत्ययवैकल्यं **समन्वागताः** । **सकलबन्धना-**

---

1 Mss. omit visarga
2 To omits यत् , V य पूर्वान्ते
3 To विपर्ययादेवाप्राप्ति०
4 Mss नैत०
5 Mss न
6 Mss लक्षणे०
7 To. प्रतिसंख्यानिरोधाप्रतिसंख्यानिरोधयो०

दिक्षणस्थवर्ज्या इति । आदौ क्षणः दुःखे धर्मज्ञानक्षान्तिक्षणः । तत्र स्थिता आदिक्षणस्थाः । सकलानि बन्धनान्येषामिति सकलबन्धनाः । अप्रहीणसर्वप्रकारक्लेशाः । सकलबन्धनाश्चादिक्षणस्थाश्च त इति सकलबन्धनादिक्षणस्थाः । ते वर्ज्या एषां तैर्वा वर्ज्याः सकलबन्धनादिक्षणस्थवर्ज्याः । के । सर्व आर्याः । ते प्रतिसंख्यानिरोधेन समन्वागताः । सकलबन्धनादिक्षणस्थास्त्वार्या न समन्वागताः । तस्यां ह्यवस्थायां क्षान्तिवध्याः क्लेशाश्छिद्यन्ते न छिन्नाः । तन्निरोधोऽपि प्राप्यते न प्राप्त ।

निरुध्यमानो मार्गस्तु प्रजहाति तदावृतिम्[1]

इति सिद्धान्तात् । एकप्रकारोपलिखितादयस्त्वार्या लौकिकमार्गप्राप्तेन निरोधेन तस्यामवस्थायां समन्वागताः । अत ऊर्ध्वं द्वितीयादिषु क्षणेषु समन्वागता एव अनास्रवमार्गप्राप्तेनापि निरोधेन । पृथग्जनाश्च केचित्समन्वागता इत्येकप्रकारोपलिखितादयः । आकाशेन तु नास्ति कश्चित्समन्वागत इति । असंबन्धात् । निरोधाभ्यां त्वस्ति संबन्धः । तस्मादाकाशस्य प्राप्तिर्नास्ति । यस्य च नास्ति प्राप्तिः । तस्याप्राप्तिरपि नास्तीति सिद्धान्त एष वैभाषिकाणाम् ।

कुत एतदिति । रूपादिचक्षुरादिवत्स्वरूपकार्यानुपलम्भात्पृच्छति । [2]सूत्रादिति । व्याख्यानमेव[2] वैभाषिकः साधयति । दशानामशैक्षाणां धर्माणामिति विस्तरः । दशाशैक्षा धर्मा [3]अष्टावशैक्षाण्यार्यमार्गाङ्गानि सम्यग्विमुक्तिः सम्यग्ज्ञानञ्च । तेषामुत्पादात् संमुखीभावात् प्रतिलम्भादादितः प्राप्तेः समन्वागमात् पश्चात्प्राप्तेः । पञ्चाङ्गं विप्रहीणः प्रहीणपञ्चाङ्ग इत्यर्थः । पञ्चाङ्गानि सत्कायदृष्टिः शीलव्रतपरामर्शो विचिकित्सा कामच्छन्दो व्यापाद इति । एतान्यनागामिफलप्राप्तौ प्रहीणानीति न युज्यन्ते । इमानि तु प्रयुज्यमानानि पञ्चाङ्गानि पश्यामो यदुतोर्ध्वभागीयानि रूपराग आरूप्यराग औद्धत्यं मानोऽविद्या चेति । प्रतिनिधिभूतायाः प्राप्तेर्योगात् प्रकृतिस्थोऽप्यर्हन्नार्य इत्युच्यते । साधनं चात्र । द्रव्यतोऽस्ति समन्वागमः सूत्रोक्तत्वात् आयतनद्रव्यवदिति । आचार्यस्त्वं प्रत्याह । तेन तर्ह्यसत्त्वाख्यैरपि चक्ररत्नादिभिः परसत्त्वैरपि स्त्रीरत्नादिभिः

1 Kārikā, VI, 81 2 . 2 Mss सूत्रादिव्याख्यातमेव
3 Mss अष्टावशैक्षा ह्यार्य०

समन्वागमो द्रव्यसत्[1] प्राप्नोति। सूत्रे वचनात्[2]। कथमिति सूत्रं दर्शयति। राजा यावद्विस्तर इति। राजा भिक्षवश्चक्रवर्ती सप्तभी रत्नैः समन्वागतः। तत्रेमानि सप्त रत्नानि। तद्यथा चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेवं[3] सप्तममिति विस्तरः। एभिः सप्तभी रत्नैः समन्वागमः[4] सूत्र उक्तः। न च द्रव्यतोऽस्तीत्यनैकान्तिकतां दर्शयति। प्रतिज्ञादोषं [5]चायमुद्भावयत्यनुमानविरोधात्। कथमित्युच्यते। न द्रव्यसन् दशाशैक्षधर्मसमन्वागमः समन्वागमस्वाभाव्यात् चक्रवर्तिसप्तरत्नसमन्वागमवदिति। अनेन प्रतिज्ञाया धर्मस्वरूपं विपर्यासयति। वशित्वं कामचार इति। इच्छानुविधायित्वम्। तत्र वशित्वमिति। चक्रवर्तिसूत्रे। अन्यत्र पुनर्द्रव्यान्तरमिति। दशाशैक्षधर्मसमन्वागमसूत्रे। कः पुनरेवमयोग[6] इति। प्रवचने हि द्विविधमिष्यते द्रव्यसच्च वस्तु प्रज्ञप्तिसच्चेति। कथमयुक्तिरिति वैभाषिकाः। आचार्य आह। अयमयोग इति विस्तर। इह यद्द्रव्यसद्वस्तु तत्प्रत्यक्षग्राह्यं वा भवेदनुमानग्राह्यं वा। तत्र प्रत्यक्षग्राह्यं रूपशब्दादि पञ्चेन्द्रियग्राह्यत्वात्। मनोविज्ञानग्राह्यमपि किंचित्प्रत्यक्षं रागद्वेषादि स्वसंवेद्यत्वात्। चक्षुःश्रोत्रादि त्वनुमानग्राह्यं चक्षुर्विज्ञानादिकृत्यानुमेयत्वात्। तद्भावाभावयोस्तद्भावाभावात्। प्राप्तिः पुनर्न प्रत्यक्षग्राह्या न चानुमानग्राह्या। तत्सिद्धौ निरवद्यानुमानादर्शनात्। तस्माद्द्रव्यधर्मासंभवादयोग इति स्थितमेतत्। इदानीमाचार्यस्तत्पक्षमुत्थाप्योत्थाप्य दूषयति। उत्पत्तिहेतुरिति विस्तरः। यस्य प्राप्तिरस्ति स उत्पद्यते हेतुसद्भावात्। असंस्कृतस्य न स्यात् प्राप्तिर्यस्मादसंस्कृतमनुत्पाद्यम्। ये च धर्मा अप्राप्ता दुःखे धर्मज्ञानक्षान्त्यादयः। ये च त्यक्ता भूमिसञ्चारवैराग्यतः। तद्यथा कामावचरा अक्लिष्टा ऊर्ध्वभूम्युपपत्त्या क्लिष्टाश्च वैराग्येण त्यक्ताः। तेषां धातुप्रत्यागमतः परिहाण्या वा कथमुत्पत्तिः स्यात्। न हि तेषां प्राप्तिररत्यनुत्पन्ननिरुद्धत्वात्। सहजप्राप्तिहेतुका चेत्। का। तेषामुत्पत्तिरधिकृता। सहजा या प्राप्तिरिदानीमुत्पद्यते सा तेषां जनिकेति। आह। जातिरिदानीं किंकरी जातिजातिर्वेति। किंकरणशीला किङ्करी। जातिर्लक्ष्यं

1 Mss द्रव्यं सत्
2 To. वदनात्
3 B. & To following Tib मेव
4 A & V समन्वागतः
5 B वाय०
6 V रेवमयोग

धर्मं जनयति । जातिजातिस्तु तल्लक्षणं जातिं जनयति । तेन यदि लक्ष्याणां धर्माणामुत्पत्तिः प्राप्तिहेतुकोच्येत । तत्र जाति किङ्करी । अथ लक्षणानाम् । उत्पत्तिस्तद्धेतुकोच्येत । तत आह ।जातिजातिर्वा किंकरीति विकल्प. । अथ वा यदि भवतैवं कल्प्येत । जातिर्धर्मं जनयति । प्राप्ति. पुनर्जातिं जनयतीति । तत्रोच्यते जातिजातिर्वा किङ्करीति । **सकलबन्धनाना खल्वपीति** विस्तर । येषामेकोऽपि क्लेशप्रकारो न प्रहीणस्ते सकलबन्धना.। तेषां सकलबन्धनाना खल्वपि **मृदुमध्याधिमात्रक्लेशोत्पत्तिप्रकारभेदो न स्यात्** । कस्मात् । **प्राप्त्यभेदात्** । विकलबन्धनानां हि प्राप्तिवैकल्यान्मृदुमध्याधिमात्रक्लेशोत्पत्तिभेद परिकल्प्येत । न तु सकलबन्धनानाम् । प्राप्तीना तुल्यत्वात् । **यतो वा स भेद** इति । यतो वा कारणादभ्यासतोऽन्यतो वा स भेद । कस्यचित्सकलबन्धनस्याधिमात्र: कस्यचिन्मध्य· कस्यचिन्मृदु. । **तत एव** भेदकारणात्तदुत्पत्तिरस्तु । तेषा मृद्वादीना क्लेशानामुत्पत्ति· । **तस्मान्नोत्पत्तिहेतुः प्राप्तिरिति** । वैभाषिक आह । **कश्चैवमाहेति** विस्तरः । **व्यवस्थाहेतुः प्राप्ति·** । **असत्या हि प्राप्तौ लौकिकमानसानाम्** इति[1] । लोके भव[2] लौकिकम् । मन एव मानसम् । लौकिकं मानसमेषाम् । त इमे लौकिकमानसाः । **आर्यपृथग्जनाः** । आर्याश्च पृथग्जनाश्च । लौकिकमानसग्रहणमार्यविशेषणम् । पृथग्जना हि नित्यमेव लौकिकमानसा· । आसंज्ञिकासंज्ञिसमापत्त्यवस्थाया वा पृथग्जनविशेषणमपि संभवति । तेषामार्यपृथग्जनानाम् । तेषामिति निर्धारणे षष्ठी । संबन्धलक्षणा वा । तेषा न **स्याद्व्यवस्थानमिति**परिच्छेद । यत्कृतं व्यवस्थानं सा प्राप्ति· । **प्रहीणाप्रहीणक्लेशताविशेषा**दिति । प्रहीणक्लेशा आर्या अप्रहीणक्लेशा. पृथग्जना. । तद्भाव.[3] । स एव विशेष. इति प्रहीणाप्रहीणक्लेशताविशेषः । तस्मात् । **एतद्व्यवस्थानं भवितुमर्हति** । ननु च पृथग्जना अपि केचित्प्रहीणक्लेशा भवन्ति । कथमवधार्यते । आर्या एव प्रहीणक्लेशा इति । अत्यन्तसमुद्घातवचनादेवमुक्तम् । **एतच्चैव कथमिति** । **एषां प्रहीणः क्लेश एषामप्रहीण** इति यदेतद्व्यवस्थानम् । तत्कथं भविष्यति । **प्राप्तौ तु सत्या** क्लेशप्राप्त्या **एतत्सिध्यति** व्यवस्थानम् । **तद्विगमाविगमात्** क्लेशप्राप्तिविगमाविगमात् । छेदाच्छेदादित्यर्थ. । येषां तत्प्राप्ति

1 Mss omit इति. 2 B & To. भवो 3 To. ०वा:

विगमाः[1] ते आर्याः। येषामविगमाः[2] ते पृथग्जना इति। ननु च पृथग्जनानामपि केषांचित् क्लेशप्राप्तिर्विगता। विगता[3] । न तु लोकोत्तरेण मार्गेण। स तर्हि लोकोत्तरमार्गकृतो विशेषः कथं परिच्छिद्यते[4] । लोकोत्तरेणेयं क्लेशप्राप्तिर्विगता लौकिकेनेयमिति। सास्रवानास्रवविसंयोगप्राप्तिभेदात्। **आश्रयविशेषादेतत्सिध्यतीति**। आत्मभावविशेषादेतद्व्यवस्थानमेषां प्रहीणः क्लेश एषामप्रहीणः क्लेश इति सिध्यति। **तथा परावृत्त** इति। तथान्यथाभूतः। **तत्प्रहेयाणां** दर्शनभावनामार्गप्रहेयाणाम्। **अग्निदग्धव्रीहिवदिति**। **यथाग्निदग्धो व्रीहिर**बीजीभूतो भवति। एवं यथोक्तेन न्यायेनाबीजीभूत **आश्रयः क्लेशानां प्रहीणक्लेश इत्युच्यते**। **उपहतबीजभावे वा**। आश्रय इत्यधिकृतम्। तेन **लौकिकेन मार्गेण प्रहीणक्लेश**[5] इति शक्यते वक्तुं बीजस्योपघातमात्रभावात्। **विपर्ययादप्रहीण** इति। अनिर्दग्धबीज आश्रयेऽनुपहतबीजभावे वा। **यश्चाप्रहीण** इति विस्तरः। यश्चाप्रहीणोऽनन्तरोक्तेन विधिना दर्शनप्रहातव्यः कामावचरो यावद्भावाग्रिकः। भावनाप्रहातव्यो वा कामावचरो यावद्भावाग्रिकः। **तेन समन्वागतः**। **यश्च प्रहीणस्तथैव** यावद्भावाग्रिकः। **तेनासमन्वागत इति प्रज्ञप्यते**। प्रज्ञप्तिधर्मोऽयमिति दर्शयति। **कुशला अपि द्विप्रकारा** इति विस्तरः। यथा क्लिष्टा द्विप्रकारा इत्यपिशब्दार्थः। समुच्चये वा कुशलाश्चेत्यर्थः। **तद्बीजभावानुपघातादिति**। तेषामुत्पत्तिलाभिकानां कुशलानां बीजं तद्बीजम्। तद्बीजस्य भावस्तद्बीजभावः। कस्य। आश्रयस्य। तद्बीजभावस्यानुपघातस्तद्बीजभावानुपघातः। तस्मात्। तद्बीजभावानुपघातात्। **समन्वागतः**। कैः। **अयत्नभाविभिः कुशलैः**। **उपघातादसमन्वागत उच्यते**। कोऽसावित्याह। **समुच्छिन्नकुशलमूलः**। **तस्य त्विति**। तस्याश्रयस्य तद्बीजभावस्य उपघातो मिथ्यादृष्ट्या वेदितव्यः। नान्यथा। तेनाह। **न तु[6] खलु कुशलानां धर्माणां बीजभावस्यात्यन्तं[7] सन्ततौ समुद्घातो** यथा क्लेशानामार्यमार्गेणात्यन्तं सन्ततौ समुद्घात इत्यभिप्रायः। **ये पुनरिति** विस्तरः। ये प्रायोगिकाः। **नैरुत्पन्नैः** तेषामुत्पत्ति-

---

1 B ०विगताः
2 Mss & B ०मविगताः
3 A and V omit विगता
4 A and C परिच्छेद्यते,
5 To. omits क्लेश
6 A & C ननु for न तु
7 A & C ०स्यात्यन्त'

स्तदुत्पत्ति· । तदुत्पत्तौ वशित्वं सामर्थ्यविशेषस्तस्याविघातात् । कस्य ' सन्तते· । समन्वागम उच्यते । कै· ' तैर्यत्नभाविभिः कुशलैः । यस्मादेवं तस्माद्बीजमेव शक्तिविशेष एवात्र समन्वागमावस्थायामनपोद्धृतं क्लिष्टानां धर्माणामार्यमार्गेण । अनुपहतं लौकिकेन मार्गेण । अयत्नभाविनां च कुशलाना धर्माणा मिथ्यादृष्ट्या[1] । परिपुष्टं च वशित्वकाले यत्नभाविनां कुशलानां बीजमिति प्रकृतम्' समन्वागमाख्या लभते । नान्यद्द्रव्यं यद्वैभाषिकैः कल्पितम् । किं पुनरिदं बीजं नामेति द्रव्याशङ्कया पृच्छति । यन्नामरूपं फलोत्पत्तौ समर्थम् । यत्पञ्चस्कन्धात्मकं रूपं फलोत्पत्तिसमर्थम् । साक्षादनन्तरं पारंपर्येण दूरत· । कोऽयं परिणामो नामेति [2]सांख्यीयपरिणामाशङ्कया पृच्छति । सन्ततेरन्यथात्वमिति । अन्यथोत्पादः । का चेयं सन्ततिरिति । किं यथा साङ्ख्यानामवस्थितद्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भाव ' तथावस्थायिन्याः सन्ततेरन्यथात्वमिति । नेत्युच्यते । किं तर्हि ' हेतुफलभूता । हेतुश्च फलं च हेतुफलम् । हेतुफलमिति नैरन्तर्येण प्रवृत्तास्त्रैयध्विका· संस्काराः संततिरिति व्यवस्थाप्यन्ते । यत्र तूक्तमिति विस्तर । यत्र तु सूत्र उक्तम् । किमित्याह । लोभेन समन्वागतोऽभव्योऽयोग्यश्चत्वारि स्मृत्युपस्थानानि कायस्मृत्युपस्थानादीनि उत्पादयितुमिति । यदि बीजं प्राप्ति । बीजं नित्यमस्तीति स्मृत्युपस्थानोत्पत्तिर्न स्यात् । भवदीयायामपि प्राप्तौ तदुत्पत्तिर्न स्यादिति तुल्यमेतत् । तस्मादुभाभ्यामपि वक्तव्यम् । तत्राधिवासनं लोभस्याविनोदनं वा समन्वागम इति । अधिवासनमभ्यनुज्ञानमविनोदनमव्युपशमनम् । सर्वथा प्रज्ञप्तिधर्मो न द्रव्यधर्म इति सर्वप्रकारेण यद्युत्पत्तिहेतुर्यदि व्यवस्थाहेतुर्यद्याश्रयविशेषो यद्यधिवासनमविनोदनं वा सर्वथा प्रज्ञप्तिधर्म· । प्रज्ञप्त्या संवृत्या व्यवहारेण धर्मः प्रज्ञप्तिधर्म । न द्रव्यधर्मः न द्रव्यतो धर्म स्वभाव इत्यर्थः । अथ वा द्रव्यं च तद्धर्मश्च स द्रव्यधर्मः । न रूपादिवत् विद्यमानस्वलक्षणो धर्म इत्यर्थ· । तस्य च प्रतिषेध' । तस्य च प्रज्ञप्तिधर्मस्य प्रतिषेधोऽसमन्वागम इति । इदमस्येति ज्ञानचिह्न'[3] प्रतिलब्धधर्माविप्रणाशकारणं च प्राप्तिरित्याचार्यसंघभद्रः । इदमस्येति[4] ज्ञानचिह्नमित्यसिद्धमेतत् । आश्रयविशेषेण तज्ज्ञानमिति ब्रूमः । यदि च

1 A & C ०दृष्ट्या
2 B & To साख्याना
3 Mss ज्ञानं चिह्न०
4 Mss इदमस्य

प्रतिलब्धधर्माविप्रणाशकारणं प्राप्तिरिष्यते। प्राप्तपरित्यागो नैव स्यात्। भवति च। तस्मादकारणमेतत्। स एव च शक्तिविशेषलक्षणं बीजभावमाचार्येण व्यवस्थापितं दूषयति। किमयं शक्तिविशेषश्चित्तादर्थान्तरमुतानर्थान्तरम्[1]। किं चातः। अर्थान्तरं चेत्[2], सिद्धं प्राप्तिरस्तीति, संज्ञामात्रे तु विवादः। अनर्थान्तरं चेत्, [3]नन्वकुशलं कुशलस्य बीजमभ्युपगतं भवत्यकुशलस्य च कुशलम्। को हि नामौष्ण्यस्य तेजसोऽनर्थान्तरत्वे सत्यौष्ण्यमेव दाहकमभ्यवस्येन्न तेजः। कुशलबीजं ह्यकुशले चेतस्यव्याकृते वा वर्तते। एवमकुशलबीजं कुशले चेतस्याव्याकृते वा वर्तते। तथैव चाव्याकृतबीजमपि कुशले चाकुशले च वर्तते। सास्रवबीजं चानास्रवेऽनास्रवबीजं च सास्रवे चेतसि वर्तत इति सांकर्यदोषः प्रसज्यत इति। अत्र वयं ब्रूमः। अनर्थान्तरभावे साकर्यदोषो भवेत्। तत्तु बीजं न चित्तादर्थान्तरं वक्तव्यम्, नाप्यनर्थान्तरम्, उपादायप्रज्ञप्तिरूपत्वात्। अथाप्यनर्थान्तरभाव, तथाप्यदोषः। कुशलेन हि चित्तेनोत्पन्नेन स्वजातीयेऽन्यजातीये वा स्वसंतानचित्ते बीजमाधीयेत। ततः कारणविशेषात्कार्यविशेष इति विशिष्टम्। तेन तच्चित्तमुत्पद्येत। तद्विशिष्टं चित्तं कुशलबीजकार्यक्रियाया समर्थमुत्पद्येत। एवमकुशलेनापि स्वजातीयेऽन्यजातीये वा स्वसंतानचित्ते बीजमाधीयेत। तच्च तेन [4]विशिष्टमकुशलबीजकार्यक्रियायां समर्थमुत्पद्येत। एवमव्याकृतेनापि चित्तेन स्वजातीये अन्यजातीये वा स्वसंतानचित्ते बीजमाधीयेत। तच्चापि तेन विशिष्टमव्याकृतबीजकार्यक्रियाया समर्थमुत्पद्येत। सास्रवेणाप्यनास्रवे चित्ते बीजमाधीयेत, अनास्रवेणापि सास्रवे। इत्येवमन्योन्यबीजाधायकमन्योन्यजनकं च चित्तं चित्तान्तरादुत्पद्यमानमन्योन्यवास्यवासकत्वेन प्रवर्तते। न च कुशले नाकुशले चित्ते शक्तिविशेष आहित इति तदकुशलं कुशलतामापद्यते कुशलं वा तदकुशलता शक्तिविशेषमात्रत्वात्। शक्तिबीजं[5] वासनेत्येकोऽयमर्थः। एवमकुशलादिवासनापि वक्तव्या। यावत् सास्रवेणानास्रवे शक्तिविशेषाधानेऽपि। अनास्रवेणापि सास्रवे शक्तिविशेषाधाने। न तत्सास्रवमनास्रवं संपद्यते, अनास्रवं वा सास्रवमिति। भवता-

1 B ०मताऽनर्थान्तर, To. ०मतोऽनर्थान्तरम् 2 A यत

3 A and C ननु कुशल, V अनकुशल

4 B & To following Tib add चित्तम् reading विशिष्टं चित्तमकु०

5 Mss शक्तिवीज

[लवशो रात्र्यहर्वृद्धी दक्षिणोत्तरगे रवौ ।
स्वच्छाययार्कसान्निध्याद् विकलेन्दुसमीक्षणम् ॥६२॥ ]

[¹लवशः

इ]ति लवं लवम्[1] । कालाध्वनोरत्यन्तसंयोगे द्वितीया[2] । **अपरपार्श्वे छाया पतन्ती विकलमण्डलं दर्शयतीति**। तद्यथा स्तम्भे प्रदीपच्छाया पतन्ती। यथा यथा स्तम्भ आसन्नो भवति तथा तथा स्तम्भः स्वच्छाययाच्छाद्यते। दूरे हि वर्तमाने प्रदीपे परिपूर्णस्तम्भो दृश्यते । किञ्चिदासन्ने किञ्चित् क्षीयते । यावदासन्ने स्तम्भो नष्टरूपो वर्तते तद्वदेतत् । **वाह्ययोग स तादृश** इति । पुनस्तिर्यगवनामोन्नामयोगेनाधोभागश्चन्द्रमण्डलस्य क्षीयते । ऊर्ध्वं वर्धते चेति योगाचाराः ॥६२॥

[परिषण्डाश्चतस्रोऽस्य दशसाहस्रिकान्तराः ।
षोडशाऽष्टौ सहस्राणि चत्वारि द्वे च निर्गताः ॥६३॥
करोटपाणयस्तासु मालाधराः सदामदाः ।
महाराजिकदेवाश्च पर्वतेष्वपि सप्तसु ॥६४॥]

**चातुर्महाराजकायिका** इति। चतुर्महाराजानां कायः। तत्र भवाश्चातुर्महाराजकायिकाः। **सुमेरुपरिषण्डादीनीति**। आदिशब्देन युगन्धरादीनि।

**दशसाहस्रिकान्तराः**

इति। योजनदशसहस्रप्रमाणान्तरा इत्यर्थः। **अर्धमाक्षिप्तमिति**। अर्धमवष्टब्धम्।

**सदामदाः**

इति। सदामत्ता इति वक्तव्ये श्लोकबन्धानुगुण्येन सदामदा इत्युक्तम्। अर्थैकत्वात्। **चतुर्थ्यां चत्वारो महाराजानः स्वयं प्रतिवसन्तीति**। धृतराष्ट्रः पूर्वदिग्भागे। विरूढको दक्षिणे। विरूपाक्षः पश्चिमे। वैश्रवण उत्तरस्मिन्नित्यनुक्रमोऽवगन्तव्यः। **चातुर्महाराजिका देवा इत्युक्तमिति**। यस्माच्चतुर्थ्यां परिषण्डायां चत्वारो महाराजानः स्वयं प्रतिवसन्ति। अत एवमुक्तम्।

**महाराजिकदेवाः**

इति। महाराजे भवा इति कृत्वा। **महिष्ठो** महत्तमः ॥६३-६४॥

[ मेरुमूर्ध्नि त्रायस्त्रिंशाः स चाशीतिसहस्रदिक् ।
विदिक्षु कूटाश्चत्वार उषिता वज्रपाणिभिः ॥६५॥

1 .1 Mss निलवल, To. निम्नवलवल, but suggests इति लवं लवं.
2 Pā., II, 3, 5.

मध्ये सार्धद्विसाहस्रपार्श्वं मध्यर्धयोजनम् ।
पुरं सुदर्शनं नाम हैमं चित्रतलं मृदु ॥६६॥
सार्धद्विशतपार्श्वोऽत्र वैजयन्तो बहिः पुनः ।
तच्चैत्ररथपारुष्यमिश्रनन्दनभूषितम् ॥६७॥ ]

स विंशतिसहस्रदिगिति । यद्येवं कथमिदमुक्तं

समुच्छ्रायघनाश्च ते[1]

इति । [2]मध्यभागमेवाभिसमीक्ष्यैवमुक्तमिति तेषामभिप्रायः । अध्यर्धमिति । अधिकमर्धमस्मिन्निति । अध्यर्धं योजनमस्येति

अध्यर्धयोजनम् ।

समुच्छ्रायेणेत्यध्याहार्यम् । धातुशतेन रत्नशतेन । नानारत्नस्थानविधानसम्पदेति । नानारत्नविधानसम्पदा नानास्थानविधानसम्पदा च । सर्वान्यभवनाना श्रियस्तासा महिमानो महत्त्वानि । ह्रेपणो लज्जनो लज्जाजनक इत्यर्थः । दैर्घ्येणार्धतृतीये[3]योजनशते[4], पार्श्वमिति । एकं पार्श्वमेतत्प्रमाणम् । यावच्चतुर्थमप्येतत्प्रमाणमिति । [5]चैत्ररथादीन्यपि चतुरस्रसार्धद्विशतपार्श्वानि[5] ॥६५-६७॥

[ विंशत्यन्तरितान्येषां सुभूमीनि चतुर्दिशम् ।
पूर्वोत्तरे पारिजातः सुधर्मा दक्षिणावरे ॥६८॥ ]

सुभूमीनि

इति । शोभना भूमय एषामिति सुभूमीनि क्रीडास्थानानि ।

चतुर्दिशम्

इति । चतस्रो [6]दिशा अस्येति[6] चतुर्दिशं क्रियाविशेषणम् । भागुरिमतेन [7]दिक्शब्द आकारान्तो[7] भवति । विंशतियोजनान्यतिक्रम्येति[8] । क्रीडास्थानानि भवन्तीति । विंशतियोजनान्यन्तरितानीत्युच्यते ॥६८॥

[ तत ऊर्ध्वं विमानेषु देवाः कामभुजस्तु षट् ।
द्वन्द्वालिङ्गनपाण्याप्तिहसितेक्षितमैथुनाः[9] ॥६९॥ ]

त्रायस्त्रिंशानामिति । त्रयस्त्रिंशास्तेषु भवास्त्रायस्त्रिंशा । तेषाम् । कामरतिप्रकर्षालयः । कामरतिविशेषस्थानम् । वृक्षानतिक्रमं सन्धायोक्तमिति । तं कोविदारवृक्ष-

---

1 Kārikā, III, 51 2 Mss मध्यभागमेवमभि० 3 To ०तृतीय
4 To ०शत 5 5 Mss ०पार्श्वानम्, To omits this portion
6 6 Mss & To दिशोऽस्येति 7 7 Mss and To दिक्शब्दोऽकारान्तो
8 To omits इति 9 Poussin ०तेक्षणमैथुना, but see Sphuṭārthā

मनतिक्रम्य स गन्धो वर्तते । तस्य पञ्चाशदयोजनानि शाखापत्रपलाशमिति । एवं वृक्षानतिक्रमं सन्धायोक्तं पञ्चाशद्योजनानि प्रतिवातं गन्धो वातीति । अत्रोत्तरमाहु ' न हि नाम प्रतिवातं वातो भवति' यत्रैवोत्पद्यते तत्रैव ध्वस्यते' न देशान्तरे सन्तानं सन्तनोति । उक्तं च पञ्चाशद्योजनानि प्रतिवातमिति । तस्मादसमाधिरेप । नस्मात् समाध्यन्तरमिदमाह । तस्यैव त्विति विस्तरः । किं पुन कारणम् ' योजनशतमत्र वातं गन्धो वाति प्रतिवातन्तु पञ्चाशत् । न तत परेणेत्यत आह । मन्दतरतमसमारम्भात्त्विति विस्तर' । मृदुमारुतप्रतिबध्यमानतया मन्दतरतमसमारम्भ । ततश्च स गन्धसन्तान आश्वेव समुच्छिद्यते । अत' कारणात न तथा विप्रकृष्टमध्वानं योजनशतप्रमाणं प्रसर्पतीति । उताहो वायुरधिवासितो जायत इति । यथा तिलेषु पुष्पगन्धाद्गन्धान्तरमुत्पद्यतेऽन्यदेव' न स पौष्पो गन्ध इत्याह । यदि पञ्चाशद्योजनं प्रतिवातं गन्धो वाति । यत्तर्हि भगवतोक्तं[1] न पुष्पगन्धः प्रतिवातमेतीति विस्तर । मौलिको गन्धो मुस्तादि· । कृत्याकृत्यं समर्थयन्त इति । कार्याकार्यं संप्रतीच्छन्ति संप्रधारयन्तीत्यर्थ ।

समासेन येषा भाजनं प्रज्ञायत इति । भाजनं स्थानम् विस्तरेणान्येऽपि देवा क्रीडाप्रमोषकप्रहासकादय सन्तीति । अत· समासेनोक्तम् ' द्वन्द्वेन यावदीक्षितेन मैथुनमेषामिति

द्वन्द्वालिङ्गनपाण्यासिहसितेक्षितमैथुना ।

सर्वेषां समापत्त्येति । षण्णामपि कामभुजा द्वन्द्वसमापत्त्या परिदाहविगमः । कालपरिमाणं तु प्रज्ञप्तावुक्तमिति । यावता कालेन द्वन्द्वालिङ्गनपाण्यासिहसितेक्षितानि भवन्ति तावता कालेन एषा भूमिसम्बन्धवासिना यामतुपितनिर्माणरतिपरनिर्मितवशवर्तिना यथाक्रमं द्वन्द्वसमापत्तिरिति वैभाषिकाः । यावद्यावदिति विस्तर । यावद्यावत् परेण परतरेण विषयाणां तीव्रतरत्वात् रागोऽपि तीव्रतरस्तावत्तावन्मैथुनकार इत्यभिप्राय ॥६९॥

[ पञ्चवर्षोपमो यावद् दशवर्षोपमः शिशुः ।
सम्भवत्येषु सम्पूर्णा· सवस्त्राश्चैव रूपिणः ॥७०॥
कामोपपत्तयस्तिस्रः कामदेवाः समानुषाः ।
सुखोपपत्तयस्तिस्रो नव त्रिध्यानभूमयः ॥७१॥ ]

ते पुनश्चत्वारो देवनिकाया इति । चातुर्महाराजकायिका याव-तुषिता· । यथोत्पन्नपरिभोग· । स एषामस्तीति यथोत्पन्नपरि-

1 Udānavarga, VI, 14

**भोगिन** । तद्भावस्तस्मात् । यथेच्छयात्मनिर्मितम् । तस्य परिभोग पूर्ववत् । **यथेच्छात्मपरनिर्मितपरिभोगित्वादिति** । आत्मना परेण च निर्मिते यथेच्छयात्मपरनिर्मिते । तयो परिभोग पूर्ववत् । यथेच्छपरनिर्मितपरिभोगित्वादिति केचित् पठन्ति । तत्र [1]यावदेव विग्रहः । परनिर्मितं यथेच्छं परनिर्मितं तस्य परिभोग इति पूर्ववत् । निर्माणरतीना परनिर्मितान् कामान् परिभोक्तुं न समृध्यति । तदेवं परनिर्मितवशवर्तिना निर्माणरतिभ्यो विशेषः प्रदर्शितो भवति । बाह्यरूपादिविषयनिर्माणं चात्र वेदितव्यम् । **विवेकजेन** प्रथमध्यानभूमिकेनाकुशलविविक्तत्वात् । **समाधिजेन** च द्वितीयध्यानभूमिकेन वितर्कविचारविगमात् । **प्रीतिसुखेनेति** । प्रीतिलक्षणेन सुखेन **निःप्रीतिकेन च सुखेन** सौमनस्यविगमात् । **सुखं विहरन्त** इति । सुखमिति क्रियाविशेषणम् । **सुखोपपत्तित्वं विचार्यमिति** । सुखाभावान्न ध्यानान्तरं सुखोपपत्तिरिति शक्य वक्तुम् । कुशलविपाकत्वेन सुखकल्पत्वात् सुखोपपत्तिरिति न शक्य व्यवस्थापयितुम् । चतुर्थेऽपि ध्याने सुखोपपत्तिप्रसङ्ग इति चेत् । न । तस्या भूमौ सुखाभावात् । तस्माद्विचार्य संप्रधार्यमेतदिति भाव ॥७०-७१॥

**[स्थानात् स्थानादधो यावत्तावदूर्ध्वं ततस्ततः ।**
**नोर्ध्वं दर्शनमस्त्येषामन्यत्रर्धिपराश्रयात् ॥७२॥]**

**एवं शेषा** इति । ऋद्धया वा यामास्तुषिता गच्छेयुः । यदि ऋद्धिमता नीयेरन् । देवेन वा तलत्येन । समानभूमिकास्तु चातुर्महाराजकायिकास्त्रयस्त्रिंशा गच्छन्ति । **आगतं तूर्ध्वोपपन्नं पश्येदिति** । समानभूमिक नोर्ध्वभूमिकमिति । प्रथमध्यानोपपन्नो न द्वितीयध्यानोपपन्नमित्यादि । **तदिच्छयेति** । ऊर्ध्वोपपन्नेच्छया । **इहत्यमिवेति** । इह भव इहत्य । अधोभूमिक इत्यर्थ । **इहत्यमिव पश्येदिति निकायान्तरीया** । यथा स्प्रष्टव्यमित्युदाहरणमात्रमेतत् । यथा शब्द इत्येतदपि गम्येत । **चतुर्णां** कामावचराणा यामादिस्थानानाम् । **द्विगुणोत्तरमिति** । यामस्थानाद्द्विगुणं तुषितस्थानमित्यादि । **चतुर्थ त्वपरिमाणमिति** । तारकावदतलवाटकप्रतिबद्धविमानत्वादपरिमाणत्वसम्भव इत्यभिप्राय ॥७२॥

**[चतुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम् ।**
**ब्रह्मलोकसहस्रञ्च साहस्रश्चूडिको मतः ॥७३॥**
**तत् सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः ।**
**तत्सहस्रं त्रिसाहस्रः समसंवर्तसम्भवः ॥७४॥]**

---

1 To पाठ एव

**सहस्रं ब्रह्मलोकानामिति** । ब्रह्मकायिकब्रह्मपुरोहितमहाब्रह्मणामित्यर्थः । लोके तथा प्रतीतत्वात् ।

**चूडिकः**

इति । महतो लोकधातोश्चूडाभूतत्वाच्चूडिक इत्युच्यते । **सम्भवो हि विवर्त** इति । विविधवर्तनं विवर्तः । विविधा वर्तन्तेऽस्मिन्निति विवर्तः । संवर्तनं **संवर्तः** संवर्तन्ते वास्मिन्निति संवर्तः । तस्मिन् हि काले सत्त्वा एकस्मिन् ध्याने द्वितीये तृतीये चतुर्थे वा संवर्तन्ते संगच्छन्त इति ।

विवर्तते च संवृत्त आस्ते संवर्तते समम्[1]

इति उत्तरत्र व्याख्यास्याम ॥७३-७४॥

**[जाम्बुद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः ।**
**द्विगुणोत्तरवृद्ध्या तु पूर्वगोदोत्तराह्वयाः ॥७५॥]**

**जाम्बुद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः**

इति । सार्धत्रिहस्तप्रमाणशरीराः । केचित्तु चतुर्हस्तप्रमाणशरीराः ।

**पूर्वगोदोत्तराह्वयाः**

इति । पूर्वगोद उत्तर इति चाह्वय एषां ते पूर्वगोदोत्तराह्वयाः । तेषां यथासंख्यमष्टहस्तप्रमाणाः पूर्वविदेहकाः षोडशहस्तप्रमाणा गोदानीया द्वात्रिंशद्धस्तप्रमाणका औत्तरकौरवा इति ॥७५॥

**[पादवृद्ध्या तनुर्यावत् सार्धक्रोशो दिवौकसाम् ।**
**कामिनां रूपिणां त्वादौ योजनार्धं ततः परम् ॥७६॥**
**अर्धार्धवृद्धिरूर्ध्वं तु परीत्ताभेभ्य आश्रयः ।**
**द्विगुणद्विगुणो हित्वाऽनभ्रकेभ्यस्त्रियोजनम् ॥७७॥]**

**पादवृद्ध्या**

इति विस्तरः ।

**यावत् सार्धक्रोशः**

इति । वक्ष्यमाणत्वात् पाद इति क्रोशस्येति गम्यते । **क्रोशचतुर्थभागमात्रं च शरीरं** चातुर्महाराजकायिकानाम् । द्विपादमात्रं त्रायस्त्रिंशानां यावदध्यर्धक्रोशमात्रं परनिर्मितवशवर्तिनाम् । **योजनत्रयेण हीनं द्विगुणमिति** । द्विगुणं कृत्वा त्रीणि योजनान्यपनेयानि । **पञ्चविंशयोजनशतमनभ्रकाणां शरीरप्रमाणमिति** । पुण्यप्रसवानामिति । पुण्यप्रसवानामर्धतृतीये[2]

---

1 Kārikā, III, 92

2 To ०तृतीय

योजनशते[1] शरीरप्रमाणम्। बृहत्फलाना पञ्चयोजनशतानीति गणयितव्यम् ॥७६-७७॥

[सहस्रमायुः कुरुषु द्वयोरर्धार्धवर्जितम्।
इहानियतमन्ते तु दशाब्दानादितोऽमितम् ॥७८॥
नृणां वर्षाणि पञ्चाशदहोरात्रो दिवौकसाम्।
कामेऽधराणां तेनायुः पञ्चवर्षशतानि तु ॥७९॥
द्विगुणोत्तरमूर्ध्वानामुभय रूपिणां पुनः।
नास्त्यहोरात्र [2]आयुस्तु कल्पैः स्वाश्रयसम्मितैः ॥८०॥
आरूप्ये विंशतिः कल्पसहस्राण्यधिकाधिकम्।
महाकल्पः परीत्ताभात् प्रभृत्यर्धमधस्ततः ॥८१॥]

कुमुदपद्मवदिति। यथेह कुमुदान्यहनि सङ्कुचन्ति रात्रौ विकसन्ति, पद्मानि तु विपर्ययेण, तथा तत्र केषाञ्चिदेव पुष्पाणां सङ्कोचादहनि च विकाशादहोरात्रव्यवस्थानम्। शकुनीनाञ्च कूजनाकूजनात्। अकूजनाद्रात्रिः कूजनात् प्रभातम्। विपर्ययेण वा यथा शकुनिजोति। मिद्धापगमोपगमाच्च। मिद्धोपगमाद्रात्रिः प्रज्ञायते। मिद्धापगमात् प्रभातमिति।

अधिकाधिकम्

इति विंशतिरधिकम्। अधिकं भवतीत्यर्थः। तेनाह। एवं तेषां यथाक्रमं चत्वारिंशत् षष्टिरशीतिः

कल्पसहस्राणि

आयुःप्रमाणमिति। विज्ञानान्त्यायतने चत्वारिंशत्। आकिञ्चन्यायतने षष्टिः। भवाग्रेऽशीतिरिति। तस्मादधो महाकल्पस्यार्धमिति विस्तरः। अशीतिरन्तरकल्पा महाकल्पा। तस्यार्धं चत्वारिंशदन्तरकल्पाः। तस्य महाकल्पार्धस्य कल्पीकृतस्य यदर्धं विंशतिरन्तरकल्पाः। तद्ब्रह्मकायिकानामायुःप्रमाणम्। यत्तदर्धकल्पीकृतं चत्वारिंशदन्तरकल्पास्तद्ब्रह्मपुरोहितानामायुःप्रमाणम्। तदेवमात्मीयार्धं महाब्रह्मण आयुःप्रमाणम्। स ह्यध्यर्धः कल्प इत्युच्यते षष्ट्यन्तरकल्पसंख्या.[3]। महाब्रह्मादीनामिति। आदिशब्देन ब्रह्मपुरोहितानां ब्रह्मकायिकानां च प्रातिलोम्येन ग्रहणम्।

---

1 To ०शतं. 2 Poussin मायु०
3 To सख्या

अर्धमधस्तत[1]

परीत्ताभान् देवनिकायादिति निर्देशापेक्षणात् ॥७८-८१॥

[कामदेवायुषा तुल्या अहोरात्रा यथाक्रमम् ।
संजीवादिषु षट्स्वायुस्तैस्तेषां कामदेववत् ॥८२॥
अर्धं प्रतापनेऽवीचावन्तःकल्पः पुनः पुनः ।
कल्पस्तिरश्चां प्रेतानां मासाहं शतपञ्चकम् ॥८३॥
वाहाद्वर्षशतेनैकतिलोद्धारक्षयायुषः ।
अर्बुदा विंशतिगुणप्रतिवृद्ध्यायुषः परे ॥८४॥
कुरुवर्ज्योऽन्तरामृत्युः ]

तेषामायुःप्रमाणमुक्तमिति । तेषां महाब्रह्मपुरोहितानां ब्रह्मकायिकानाम् ।

कामदेवायुषा तुल्याः

इति विस्तरः । चातुर्महाराजकायिकानां यदायुःप्रमाणमुक्तम् । स सञ्जीवे अहोरात्रः । एवं यावद्यत् परनिर्मितवशवर्तिनामायुःप्रमाणमुक्तं स तपने अहोरात्रः ।

कामदेववत्

इति 'कामदेवानामिव कामदेववत् ।' तत्र तस्येवेति वतिः[2] । तेन यावद् द्वादशमासकेनेति 'तेन [3]ततस्त्येनाहोरात्रेण तेषां त्रिंशद्रात्रकेण मासेन द्वादशमासकेन संवत्सरेण तत्रत्यानि दिव्यानि पञ्च वर्षशतान्यायुरित्यादि । एवमन्येष्वपि यथायोगं योज्यमिति । यद्यामानामायुःप्रमाणं तत् संघाते महानरके एकं रात्रिन्दिवम् 'तेन रात्रिन्दिवेन तस्मिन् वर्षसहस्रद्वयमायुःप्रमाणम् । एवमन्येष्वपि यथायोगं योज्यम् । अष्टाविमे भिक्षव इति । अष्टाविमे भिक्षवो नागा महानागाः कल्पस्था धरणीन्धरा अप्रत्युद्धार्याः सुपर्णिनः पक्षिराजस्य देवासुरमपि संग्राममनुभवन्त्यपि [4]प्रत्यनुभवन्त्यपि । ते पुनः कतमे । तद् यथा नन्दो नागराजः । उपनन्दो नागराजः । अश्वतरी नागराजः । मुचिलिन्दो नागराजः । मनस्वी नागराजः । धृतराष्ट्रो नागराजः । महाकारो[5] नागराजः । एलपत्रो नागराज इति । चूडिकाबद्ध इति 'शिखाबद्धः ।

---

1 To. adds इति 2 Pā, VI, I, 116 3 To. ततस्त्येना०
4 Mss. & To प्रत्यन्यभव० 5 To ०कालो

एकजातिप्रतिबद्धस्येति । एकजन्मप्रतिबद्धबुद्धत्वस्य । चरमभविकस्येति । अन्त्यजन्मनः । येन तस्मिन्नेव जन्मन्यर्हत्त्वं साक्षात् कर्तव्यम् । तस्य नास्त्यन्तरेण कालक्रिया यावदर्हत्त्वं न प्राप्नोति । श्रद्धानुसारिधर्मानुसारिणोः । नास्त्यन्तरेण कालक्रिया यावच्छ्रद्धाधिमुक्तदृष्टिप्राप्तौ न भवतः । तद्गर्भयोरिति । बोधिसत्त्वचक्रवर्तिगर्भयोः । तन्मात्रोर्नास्त्यन्तरेण कालक्रिया यावन्न तौ जायेते । एवमादीनामिति । आदिशब्देन निरोधासंज्ञिसमापत्तिसमापन्नानां मैत्र्यादिसमापन्नाना च नास्त्यन्तरेण कालक्रिया यावत्तस्मात् समाधेर्न व्युत्तिष्ठन्ते ॥

[ परमाण्वक्षरक्षणाः ।
रूपनामाध्वपर्यन्ताः परमाणुरणुस्तथा ॥८५॥
लोहाप्छशाविगोछिद्ररजोलिक्षास्तदुद्भवाः ।
यवस्तथाङ्गुलीपर्व ज्ञेयं सप्तगुणोत्तरम् ॥८६॥
चतुर्विंशतिरङ्गुल्यो हस्तो हस्तचतुष्टयम् ।
धनुः पञ्चशतान्येषां क्रोशोऽरण्यं [तथा] मतम् ॥८७॥
तेऽष्टौ योजनमित्याहुः ]

चतुर्विंशतिरङ्गुल्यो हस्तः

इति । अभिधर्मवचनकाले यः पुरुषहस्त. स ग्रहीतव्यः । येन चतुर्द्वीपकादि परिमाणव्यवस्थानम् ॥

[ विंशतुक्षणशतं पुनः ।
तत्क्षणस्ते पुनः षष्टिर्लवस्त्रिंशद्गुणोत्तराः ॥८८॥
त्रयो मुहूर्ताहोरात्रमासा द्वादशमासकः ।
संवत्सरः सोनरात्र ]

हेमन्तानामिति । यथा वर्षा इत्येकस्मिन्नप्यर्थे बहुवचनं प्रसिद्धं [1]तथा हेमन्ता ग्रीष्मा इति द्रष्टव्यम् । प्रवचने त्रय एवर्तवो न यथा लोके षडिति । शिशिरो हि शीतसामान्याद्धेमन्त इत्युक्तः । वसन्तोऽप्यूष्मसामान्याद् ग्रीष्म इत्युक्तः । शरदपि वृष्टिसामान्याद्वर्षा इत्युक्तेति । हेमन्तग्रीष्मवर्षाणामिति । सर्वबौद्धानां हेमन्ताः प्रथम ऋतुः । ग्रीष्मा द्वितीयः । वर्षास्तृतीयः । तत्राधिकमर्धमस्येत्यध्यर्धो मासः । तस्मिन्नध्यर्धे[2]मासि निर्गते । मार्गशीर्षे सपौषार्धेऽधिक्रान्ते । शेषेऽर्धमासे । पौषस्यार्धेऽवशिष्टे कृष्णचतुर्दश्याम् । ऊनरात्रो विद्वद्भिर्बौद्धैर्निपात्यते

1 Mss. omit तथा To. ए 2 To. अध्यर्ध०

त्यज्यत इत्यर्थः । चातुर्दशिकोऽत्र भिक्षुभिः पोषधः क्रियते । एवं माघे फाल्गुनार्धेऽतिक्रान्ते शेषेऽर्धमासे फाल्गुनावशिष्टे पुनरपर ऊनरात्रो निपात्यते । तथा ग्रीष्मेषु वैशाखकृष्णचतुर्दश्यामाषाढकृष्णचतुर्दश्यां[1] चापरावूनरात्रौ निपात्येते । [2]वर्षास्वपि भाद्रपदकृष्णचतुर्दश्या कार्त्तिककृष्णचतुर्दश्यां चापरावूनरात्रौ[3] निपात्येते ॥

**[ कल्पो बहुविधः स्मृतः ॥८९॥**

**संवर्तकल्पो नारकासम्भवाद्भाजनक्षयः ।**
**विवर्तकल्पः प्राग्वायोर्यावन्नारकसम्भव. ॥९०॥**
**अन्तःकल्पोऽमिताद्यावद्दशवर्षायुषस्ततः ।**
**उत्कर्षा अपकर्षाश्च कल्पा अष्टादशापरे ॥९१॥**
**उत्कर्ष एकस्तेऽशीतिसहस्राद्यावदायुषः ।**
**इति लोको विवृत्तोऽयं कल्पांस्तिष्ठति विंशतिम् ॥९२॥**
**विवर्तते च संवृत्त आस्ते संवर्तते समम् ।**
**तेऽह्यशीतिर्महाकल्पस्तदसंख्यत्रयोद्भवम् ॥९३॥**
**बुद्धत्वम् ]**

गतिसंवर्तनीति । नरकाद्याः पञ्चगतयो गत्येकदेशे देवगतौ संवर्तन्त एकस्थीभवन्तीत्यर्थः । धातुसंवर्तनी चेति । कामधातू रूपधातौ संवर्तत इति । **सत्त्वसंवर्तनी** । यदा सत्त्वा एव संवर्तन्ते ध्यानेष्वेकस्थीभवन्ति । न तु तावद्भाजनानि संवर्तन्ते विनश्यन्तीत्यर्थ. । भाजनसंवर्तनीति । यदा भाजनान्येव संवर्तन्ते न तु सत्त्वाः । एकस्यापि सत्त्वस्य तत्राभावात् । यदयं लोक इति विस्तरः । यदयं लोको विंशतिमन्तरकल्पान विवृत्तो जातः । यावन्नरकोत्पत्तिप्रवृत्ति[4] [5]निर्यातं तन्निष्ठितं वक्तव्यमित्यर्थः । तत्प्रतिपन्नं वक्तव्यमिति । तत्संवर्तनमारब्धं वक्तव्यमित्यर्थः । एवं तिर्यक्संवर्तनी प्रेतसंवर्तनीति च वक्तव्येति । यदा तिर्यक्ष्वेकसत्त्वोऽपि नावशिष्टो भवति । इयतायं लोकः संवृत्तो भवति । तिर्यक्संवर्तन्या यस्य तदानी-नियतं तिर्यग् वेदनीयं कर्म भ्रियते । स लोकधात्वन्तरतिर्यक्षु क्षिप्यते । एवं प्रेतसंवर्तनी योज्या यदा प्रेतेष्विति विस्तरेण । मनुष्यसहचरिष्णव इति । मनुष्यसहचरणशीला गोमहिषादय. । धर्मताप्रतिलम्भिक-

1 To. ०माषाढचतुर्दश्या 2 To. वर्षेष्वपि 3 Mss. पराधीनरात्री
4 To. ०प्रवृत्ति 5 Mss. निर्यातं

मिति। धर्मता नाम कुशलानां धर्माणां तदानीं परिणामविशेषः । तथा प्रतिलम्भोऽस्यास्तीति धर्मताप्रतिलम्भिकम्। यन्मनुष्येष्विति। जम्बुद्वीपमनुष्येष्विव्यभिप्रायः। एवं पूर्वविदेहगोदानीयसंवर्तन्यौ योज्यौ। उत्तरकुरुसंवर्तनी त्वेवं वक्तव्या भवति। स कालो यदुत्तरकुरौ मनुष्याश्च्यवन्त एव नोपपद्यन्ते। यदा तत्रैकसत्त्वोऽपि नावशिष्टो भवति। इयतायं लोकः संवृत्तो भवत्युत्तरकुरुसंवर्तन्येति। कस्मादेवं वक्तव्या न तु जम्बुद्वीपसंवर्तन्यादिवदित्याह। तत्र वैराग्याभावात्। तत्रोत्तरकुरौ वैराग्याभावात्। इत एव सामन्तकादिति[1]। चातुर्द्वीपकसामन्तकादित्यर्थः। तदाक्षेपके कर्मणि परिक्षीण इति। भाजनाक्षेपके भाजनोत्पादके[2] परिक्षीण इत्यर्थः। ब्राह्मं विमानं निर्दहदर्चिः परैति। गच्छतीत्यर्थः। तच्च तद्भूमिकमेवार्चिरिति। प्रथमध्यानभूमिकम्। कस्मादित्याह। न हि विसभागा विसदृशा अपक्षाला उपद्रवा अग्न्यादयः क्रमन्ते तापयन्त इत्यर्थः। आह। यद्येवं किमिदमुच्यते। तस्मादेव चेति विस्तरेणोत्पत उच्यते। तत्सम्बद्धसम्भूतत्वादिति विस्तरः। तेन कामावचरेणार्चिषा सम्बद्धं सम्भूतं रूपावचरमर्चिस्तद्भावस्तस्मादिति। एवमन्यस्यामिति। यथा तेजःसंवर्तन्यामुक्तमेवमन्यस्यामप्यप्संवर्तन्यां वायुसंवर्तन्यां च यथासम्भवं वेदितव्यम्। कथं कृत्वा नरकादिसंवर्तनी[3]। यां[4] पूर्ववदुक्त्वा यावदियताऽयं लोकः संवृत्तो भवति सत्त्वसंवर्तन्या। ततः शून्ये भाजने सहजोऽब्धातुः सम्भवति। यस्तं भाजनलोकं लवणमिव विलोपयति। स कामावचरोऽब्धातुः प्रथमध्यान[5]भूमिकमब्धातुं सम्बध्नाति। स च द्वितीयध्यानभूमिकं[5] सम्बध्नाति। स चाब्धातुस्त्रिभूमिकोऽपि स्वेन स्वेन भाजनेन सहान्तर्धीयते। एवं वायुसंवर्तन्यां सहजो वायुः सम्भवतीति वक्तव्यम्। कथमिति पूर्ववदुक्त्वा यावत् सहजो वायुधातुः सम्भवतीति। यस्तं भाजनलोकं कामावचरं यावत्तृतीयध्यानभूमिकं क्रमेण पांशुराशिमिव विकरति विध्वंसयति। यावत्तेनैव सार्धमन्तर्धीयते।

विवर्तकल्पं विस्तरेण वक्तुकाम आह। तथाहि संवृत्तो लोक इति विस्तरः। तथेति यथा वर्णितम्। तदेति विस्तरः। यदाकाशे मन्दमन्दा वायवः स्यन्दन्ते तदा प्रभृति यदयं लोको विंशतिमन्तरकल्पान् संवृत्तोऽ-

1 Mss सामन्तकादि
2 Mss. भावनोत्पादके
3 To. संवर्तनी
4 To omits यां.
5..5 Mss. भूमिक कार्तिकल्पश्चतुर्दश्याम् चा०

स्थात् ' तन्निर्यातं परिसमाप्तं वक्तव्यम् तदुपयातं वक्तव्यमिति ' तदारब्धं वक्तव्यमित्यर्थः । यथोक्तक्रमविधानमिति ' यथोक्तेन क्रमेण विधानेन च सर्वं जायते । यथोक्तः क्रमो वायुमण्डलमब्मण्डलं ततः काञ्चनमयी पृथिवी ततः सुमेर्वादयश्चेति । यथोक्तं विधानं यस्य यद्विधानमुक्तमायामोद्वेधपरिणाह-संस्थानलक्षणम् ' तत्तथा सर्वं जायते । प्रथमं तु ब्राह्ममिति विस्तरः । यत् पश्चात् संवर्तते तत्पूर्वं विवर्तं इति स्थितिः । तेनाह ' प्रथमं तु ब्राह्मं विमानमुत्पद्यते ' ततो यावद्यामीयमिति । यावच्छब्देन ब्रह्मविमानानन्तरं परनिर्मितवशवर्तिविमानं तदनन्तरं निर्माणरतिविमानं ततोऽनन्तरं यावद्यामीयं विमानमुत्पद्यते । ततो यामीयविमानोत्पत्त्यनन्तरं वायुमण्डलादीनीति । यदुत भाजनविवर्तन्येति ' न सत्त्वविवर्तन्येति दर्शयति ' शून्ये ब्राह्मे विमान उत्पद्यते इति महाब्रह्मा । अन्येऽपि च सत्त्वा इति तत्परिवाराः । ततश्च्युत्वा ब्रह्मपुरोहितेष्विति ' तत आभास्वरेभ्यः । तन्निर्यातं भवतीति ' तद्विवर्तनं लोकस्य परिसमाप्तं भवतीत्यर्थः । तदुपयातं भवतीति । आरब्धं [1]विवृत्तावस्थानायेत्यर्थः ' [2]एकोनविंशतिरन्तरकल्पा अपरिमितायुषामिति । [3]एकोऽन्तरकल्पो ब्रह्मलोकविमानादिभाजननिवृत्त्याऽतिक्रान्त इत्येकोनविंशतिरवशिष्टा अन्तर-कल्पा अपरिमितायुषां मनुष्याणामतिक्रामन्त्यानरकसत्त्वप्रादुर्भावात् । सा च विवर्तमानावस्थातिक्रान्तैवावगन्तव्या । प्रादुर्भूते नारके सत्त्वे विवृत्ता-वस्था प्रारब्धा । सेयमुच्यते अपरिमितायुषामेव ह्रसतां यावद्दशवर्षायुषा-मेको विवृत्तावस्थान्तरकल्पः । तेनाह ' सोऽसौ विवृत्ताना तिष्ठतां प्रथमो-ऽन्तरकल्प इति । ततोऽष्टादश

उत्कर्षा अपकर्षाश्च ]

ततस्तु

उत्कर्ष एकः

इति । विंशत्यन्तरकल्पपरिमाणा विवृत्तावस्थावगन्तव्या ।

पञ्चस्कन्धस्वभावः कल्पः

त एवाधृा कथावस्तु[4]

इति । मुक्तकमिति ' न चतुरागमान्तर्गतमित्यर्थः । अष्टकं मध्याद्विस्मृतमिति ।

1. To. विवृत्तावस्थानमित्यर्थः, Mss. विवर्तावस्थानायेत्यर्थः
2 Mss. and To. एकान्न० 3 Mss. एकोत्तर० 4 Kārikā, I, 7.

अष्टौ स्थानानि क्वापि प्रदेशे प्रमुषितत्वान्न पठितानि। तेनात्र द्वापञ्चाशत् स्थानानि भवन्ति। षष्ठ्या च संख्यास्थानैर्भवितव्यम्। तान्यष्टकानि स्वयं कानिचिन्नामानि कृत्वा पठितव्यानि। येन षष्टिसंख्यास्थानानि परिपूर्णानि भवेयुः। [1]असंख्या इति। असंख्येयाः संख्यानेनासंख्येया असंख्या[1] इति। बहुवचननिर्देशादनुक्ता अपि तद्धिता भवन्ति। यद्येवं

तदसंख्यत्रयोद्भवम्

इति कथमुक्तम्। नैष दोषः। नास्ति संख्या परेणैष्वित्यसंख्याः। असंख्येयाः कल्पाः। असंख्याश्चासंख्याश्चासंख्याश्चेत्यसंख्याः। तेषां त्रयम्। तेषां कल्पाना-[2]मसंख्यत्रय उद्भवतीति[2] तदसंख्यत्रयोद्भवं बुद्धत्वमित्येवं तद्व्याख्यातव्यम्। तस्याभिमतत्वादिति। तस्य परार्थस्याभिमतत्वात्। यो ह्यभिमतः स स्वार्थो दृष्ट इति। तद्धेतोरिति। आत्मस्नेहहेतोः। आत्मस्नेहं तेभ्य इति विस्तरः। आत्मस्नेहं तेभ्यः स्वासान्तानिकेभ्यः संस्कारेभ्यो निवर्त्य अपेक्षा करुणा-लक्षणां वर्धयित्वा तद्धेतोरपेक्षाहेतोर्दुःखान्युद्वहन्तीति सम्भाव्य प्रतिपत्तव्यम्। मध्यो दुःखनिवृत्तिमेवेति। प्रत्येकबुद्धः श्रावको दुःखनिवृत्तिमेव मोक्षमेव प्रार्थयते न सुखं सांसारिकम्। कुत। दुःखास्पद तद्यतः। यस्मात् तत् सांसारिकं सुखं दुःखस्थानं भवति। श्रेष्ठो बोधिसत्त्वः स्वसन्ततिगतैर्दुःखैः परेषां सुखमाभ्युदयिकं दुःखात्यन्तनिवृत्तिमेव च निःश्रेयसस्वभावां परेषां प्रार्थयते। अथवा परेषां सुखमाभ्युदयिकनैःश्रेयसिकं प्रार्थयते। दुःखात्यन्त-निवृत्तिमेव च बुद्धलक्षणामात्मीयां परहितक्रियोपायभूतां प्रार्थयते। कस्मा-दित्याह। यतस्तद्दुःखदुःख्येव स इति। यस्मात् परदुःखैः स बोधिसत्त्वो दुःखी भवति। अतएव सुखं द्विप्रकारं प्रार्थयत इति॥

[अपकर्षे तु शताद्यावत्तदुद्भवः।
द्वयोः प्रत्येकबुद्धानां खड्गः कल्पशतान्वयः॥९४॥

अपकर्षस्याधस्तादिति विस्तरः। वर्षशतस्याधस्तात्। पञ्चकषाया अभ्युत्सदा भवन्ति। अभ्यधिका भवन्तीत्यर्थः। वर्षशतेऽप्युत्सदा न त्वभ्युत्-सदा यथाधस्तात्। आयुःकषाय इति। किट्टभूतं प्रत्यवरं कषायः। आयुरेव कषाय आयुःकषायः। एवं कल्पकषायादयः। यथाक्रममिति। जीवितविपत्तिरायुःकषायेण। उपकरणविपत्तिः कल्पकषायेण। धान्यपुष्पफलौषधा-दीन्युपकरणान्यल्परसवीर्यविपाकप्रभावानि हि तानि भवन्ति। नैव वा भवन्ति।

---

1. 1 Mss. असंख्या इति असंख्या संख्याने न संख्याः। असंख्या
2. 2 Mss. & To. त्रयोद्भवतीति

द्वाभ्यां कुशलपक्षविपत्तिरिति । क्लेशकषायेण दृष्टिकषायेण च कुशलपक्षस्य विपत्तिः । कथमित्याह । कामसुखल्लिकात्मक्लमथानुयोगाधिकारादिति । कामसुखमेव कामसुखल्लिका । कामसुखलीनतेति वा कामतृष्णा वा कामसुखल्लिका । यथा कामसुखे सज्यते । आत्मक्लमथ आत्मोपताप आत्मपीडेत्यर्थः । कामसुखल्लिकात्मक्लमथयोरनुयोगोऽनुसेवनं तस्याधिकारस्तस्मात् । तदुक्तम् । कामसुखल्लिकानुयोगमात्मक्लमथानुयोगं वाधिकृत्यारभ्य क्लेशदृष्टिकषायाभ्या कुशलपक्षविपत्तिर्भवतीति । एवं तावदविशेषेण । गृहिप्रव्रजितपक्षयोर्वा । गृहिपक्षस्य क्लेशकषायेण कुशलपक्षविपत्तिः । प्रव्रजितपक्षस्य दृष्टिकषायेण । यथाक्रमं कामप्रधाना गृहिणो दृष्टिप्रधाना. प्रव्रजिता इति । एकेनेति । सत्त्वकषायेण ।

द्विविधा हि प्रत्येकबुद्धा इति । यस्मादू वर्गचारिणोऽपि प्रत्येकबुद्धाः श्रावकपूर्विणो भवन्ति न केवलं खड्गविषाणकल्पाः । तस्मादुत्कर्षेऽपि तेषामुत्पत्तिर्न विरुध्यते । ये ह्युत्पादितस्रोतआपत्तिफलसकृदागामिफला अन्तर्हिते बुद्धशासने स्वयमर्हत्त्वमधिगच्छन्ति । ते वर्गचारिणः । ते[1] च [2]बुद्धोत्पादकाल एव प्राकृतसंवेगत्वान्न पुनः संवेजनीया इति । तदीर्यापथसन्दर्शनादिति । प्रत्येकबुद्धेर्यापथसन्दर्शनात् । पर्यङ्कबद्धसमाधिरूपसन्दर्शनात् । न चार्याः सन्तः कष्टानि तपांसि तप्येरन्निति । सत्यदर्शनकाल एव शीलव्रतपरामर्शदृष्टेः प्रहीणत्वात् । शीलव्रतपरामर्शदृष्टिपूर्वकत्वाच्च कष्टतपःक्रियायाः । खड्गविषाणकल्पा इति । यथा खड्गविषाणा अद्वितीया भवन्त्येवं ते गृहस्थप्रव्रजितैरन्यैश्च प्रत्येकबुद्धैरसंसृष्टविहारिण इति । खड्गविषाणकल्पा इत्युच्यन्ते ।

कल्पशतान्वयः

इति । कल्पशतकृतबोधिहेतुरित्यर्थः । अत एव व्याचष्टे । महाकल्पानां शतं बोधिसम्भारेषु शीलसमाधिप्रज्ञालक्षणेषु चरितः कृतप्रयोग इति । शक्यश्च तैरिति विस्तरः । अथापि ते प्रतिसंवित्प्राप्ता न भवेयु. । तथापि तैः प्रणिधिज्ञानेन पूर्वबुद्धानामनुशासनमनुस्मृत्य धर्मो देशयितुं शक्यते । ऋद्धेराविःकरणादिति । आकाशगमनादिकायाः सत्त्वानुग्रहार्थं प्रकाशनात् । नापि सत्त्वानामभव्यत्वात् । धर्मं न देशयन्तीति वाक्यशेषः । कस्मादित्याह । तथाहीति विस्तरः । यस्माद्धि लौकिकवीतरागास्तदानीं संविद्यन्ते । तस्माल्लोकोत्तरवीतरागा अपि सम्भवेयुरित्यभिप्रायः । यद्येते न हेतवो धर्मदेशनाया अकरणे । कस्तर्हि हेतु-

1 Mss. ये    2 To. prefixes पूर्व.

रित्याह। किं तर्हीति विस्तरः। पूर्वाभ्यासवशेन असंसर्गाभ्यासवशेन [1]अल्पोत्सुकताधिमुक्तत्वात्। तत्कृतरुचित्वादित्यर्थः। गणपरिकर्षण-प्रसङ्गपरिहार्यं च नोत्सहन्ते गम्भीरधर्मग्रहणाय परेषां व्यापर्तुम्। तथा व्यापारे हि सति गणः परिकृष्टव्यः स्यात्। गणपरिकर्षणप्रसङ्गं पुनः कस्मात् परिहरन्ति। व्याक्षेपसंसर्गभीरुत्वात्। व्याक्षेपसंसर्गाभ्या भीरुत्वात्। व्याक्षेपो-ऽभिप्रेतसमाध्यादिकर्मण्यप्रवृत्तिः। संसर्गोऽन्यसम्पर्कः। व्याक्षेपसंसर्गभीरुत्वं पुन पूर्वाभ्यासवशात् ॥९४॥

[चक्रवर्तिसमुत्पत्तिर्नाधोऽशीतिसहस्रकात्।
सुवर्णरूप्यताम्रायश्चक्रिणस्तेऽधरक्रमात् ॥९५॥
एकद्वित्रिचतुर्द्वीपा न च द्वौ सह बुद्धवत्।
प्रत्युद्यानस्वयंयानकलहास्त्रजितोऽवधाः ॥९६॥
देशस्थोत्तप्तपूर्णत्वैर्लक्षणातिशयो मुनेः।]

एष प्राज्ञप्तिक इति। प्रज्ञप्तिशास्त्रनिर्देशः। चतुर्विधाश्चक्रवर्तिन इति। सूत्रे तु सुवर्णचक्रवर्त्येवोक्तः प्राधान्यात्। अस्थानं वर्तमानकालापेक्षया। अनवकाशोऽनागतापेक्षया। अनागतेऽप्यध्वनि सम्भवाद्युगपद्द्वयोरिति। अपूर्वाचरमाविति। नैकः पूर्वो नापरः पश्चात्। किं तर्हि। सहेत्यर्थः। समसम इति वीप्सा। अथवा समैः सर्वसत्त्वेषु बुद्धैर्भगवद्भिः सम इति समसमः। तावतोऽनभिसंस्कारेणेति। तावतो लोकधातोरनाभोगेन दर्शनात्। निकायान्तरीया इति। महासांघिकप्रभृतयः। न चैकत्रेति। लोकधातौ। पुरुषायुषमिति। पुरुषस्यायुः पुरुषायुषम्। तद्बिभ्रतेति वर्तते। इद-मिन्द्रियमिति श्रद्धादि। अस्याङ्गस्येति। अस्य प्रत्ययस्य। किमिदमेकं लोक-धातुमधिकृत्येति। एकचातुर्द्वीपकं त्रिसाहस्रमहासाहस्रं वा लोकधातुमधिकृत्यैत-दुक्तमित्यभिप्रायः। चक्रवर्तिनोऽपि चेति विस्तरः। अस्थानमनवकाशो यदपूर्वा-चरमौ द्वौ तथागतौ[2] उत्पद्येयातामिति नानेन वचनेन लोकधात्वन्तरोत्पाद-प्रतिषेधः। तथागताना तथोक्तत्वात्। तद् यथा चक्रवर्तिनाम्। चक्रवर्तिनोऽपि हि तथोक्ताः। अस्थानमनवकाशो यदपूर्वाचरमौ द्वौ चक्रवर्तिनौ लोक उत्पद्येयाता-मिति। जनाः प्राकृतमनुष्याः। मनुष्यास्तु मतिमन्तः। शस्त्राण्यावहन्ति उत्क्षिपन्ति। गृहपतिरत्नं कोशाध्यक्षजातीयः। परिणायकरत्नं बलाध्यक्षजा-

1 To. अल्पोत्सुखताधि०    2 To. adds. लोके.

तीयः। [1]तत्सम्बद्धजातीयमिति। तेन चक्रवर्तिना सम्बद्ध'। तत्सम्बद्धस्य तत्सम्बद्धेन वा संवर्तनं तस्मै हितं तदनुकूलं तत्सम्बद्धसंवर्तनीयमिति। येन सत्त्वेन कर्मोपचितं तस्मिन्नुत्पन्ने चक्रवर्तिन'[2] स्वान्येवैनं सत्त्वं कर्माण्युत्पादयन्ति। न तु सत्त्वश्चक्रवर्तिकुशलविपाकोत्पत्तिप्रत्ययभावमापद्यते। स च कुशलविपाकश्चक्रवर्तिन एवेत्यवगन्तव्यम्। देशस्थरत्नराणीति' अभ्रष्टस्थानानि। उत्तप्तनराणि [3]प्रभास्वरतराणि। संपूर्णतराण्यखण्डरूपाणि। चक्रवर्तिराजप्रस्तावेनेदं विचार्यते॥

**[प्रागासन् रूपिवत् सत्त्वा रसरागात्ततः शनैः ॥९७॥**
**आलस्यात् संग्रहं कृत्वा भागादैः क्षेत्रपो भृतः।**
**ततः कर्मपथाधिक्यादपह्रासे दशायुषः ॥९८॥]**

किं खलु यावत् सराजका इति' रूपावचरा इवासन्नित्यस्यार्थस्य प्रतिपादनाय सूत्रमानयति। सूत्र उक्तमिति विस्तरः। दृश्यरूपत्वाद्रूपिणः। उपपादुकत्वान्मनोमयाः। हस्तपादतदङ्गुल्याद्युपेतत्वात् सर्वाङ्गप्रत्यङ्गोपेताः[4]' समग्रेन्द्रियत्वादविकला। काणविभ्रान्ताद्यभावादहीनेन्द्रियाः। दर्शनीयसंस्थानत्वाच् शुभाः। रमणीयवर्णत्वाद् वर्णस्थायिनः। आदित्यादिप्रभानपेक्षत्वात् स्वयंप्रभाः। कर्मर्द्धिसंयोगेनाकाशचरत्वाद् विहायसंगमाः। कवडीकाराहारानपेक्षत्वात् प्रीतिभक्षाः प्रीत्याहारा इति पर्यायौ। तथा दीर्घायुषो दीर्घमध्वानं तिष्ठन्तीति। मधुस्वादुरस इति' मधुन इव स्वादुरसोऽस्य रस इति' अयोनिशोमनस्कारस्य प्राहभूतस्य प्रासता गतानां सत्त्वानां काम एव ग्रहः। तेनावेशस्तस्यारम्भ इति। सायमाशार्थमिति। अपराह्णभोजनार्थम्। प्रातराशार्थमिति प्रातर्भोजनार्थम्' सन्निधिकारः संग्रहः। क्षेत्राणि विभज्य अकृष्टोप्तेन शालिना तद्वृत्तिकल्पनात्। क्षत्रियादिसंज्ञानां नैरुक्तेन विधिना सिद्धिः॥

**[कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः।**
**दिवसान् सप्त मासांश्च वर्षाणि च यथाक्रमम् ॥९९॥]**

---

1 To. तत्सम्बन्ध०
2 To. चक्रवर्तिनि
3 To. प्रभास्वराणि
4 To. ०पेतः

**निर्याणमिति** परिसमाप्तिः । **अधर्मरागरक्ता** इति । काममिथ्याचार-रागाभ्यवमिता । **विषमलोभाभिभूता** इति । विषमलोभ परकीयस्त्रीकरणेच्छा चौर्याद् बलाद्वा तेनाभिभूताः । **मिथ्याधर्मपरीता** इति । विपरीतधर्मपरिदीपका । **अमातृज्ञा अपितृज्ञा** इति विस्तर । **पुनः कल्पस्य निर्याणकाल** इति । इह कल्पस्य निर्याणानि त्रीण्युच्यन्ते शस्त्ररोगदुर्भिक्षाणि । किमेकस्य दशवर्षायुः-कल्पस्य त्रीणि निर्याणानि क्रमेण भवन्ति आहोस्विदेकैकस्यैकैकं क्रमेणेति । एके तावदाहु एकैकमिति । अपरे पुनराहु एकस्य क्रमेण त्रीणि भवन्ति पूर्व दुर्भिक्षं तदनन्तरो रोगस्तदनन्तरं शस्त्रमिति । पूर्वकस्तु पक्ष इष्ट इति पश्यामः । **तैरेव दोषैरिति** अधर्मादिरागादिभि । **अमनुष्याः** पिशाचादय इति व्याख्या-दिका**मुत्सृजन्ति** ओजो वा हरन्ति प्रभावतो वा पुष्पफलौषधिप्रभृतीना महा-भूतानि दूषयन्ति । **यतस्तेषामसाध्या व्याधय प्रादुर्भवन्ति । यतो म्रियन्ते । तदा चेति** विस्तर । यदेह जम्बुद्वीपे शस्त्रक प्राणातिपातस्तदा **द्वयोर्द्वीपयोः** पूर्वविदेहावरगोदानीययोर्व्यापाद **उद्रेकप्राप्तो भवति** । यदेह रोगस्तदा तयो-**र्दौर्बल्यम्** यदेह दुर्भिक्षं[1] **तयोर्जिघत्सापिपासे** ॥९९॥

**[संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिः ।**
**ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम्** ॥१००॥
**तदपक्षालसाधर्म्यान्न चतुर्थेऽस्त्यनिञ्जनात् ।**
**न नित्यं सह सत्त्वेन तद्विमानोदयव्ययात्** ॥१०१॥]

**तीर्थकाराः** कणभुक्प्रभृतयः । **वायुर्बीजमुक्तमिति** । बहुविधप्रभावभिन्नै वायु-भिरभिमथ्यमाना इति[2] वचनात् । **तस्य निमित्तमिति** । रूपावचरो वायुरविनष्टः । कामावचरस्य विवर्तकाले प्रथमक्षणोत्पन्नस्य वायोर्निमित्तम् । **बीजान्याह्रियन्त** इति । पञ्च बीजजातानि मूलबीजादीनि । मूलबीजं [3]फलुबीजं बीजबीजमग्रबीजं स्कन्धबीजम् । **एवमपीति** यद्यप्याह्रियन्ते बीजानि **न ते स्थूलभावाना**[4] **बीजादिभ्यो** बीजाङ्कुरगण्डादिभ्योऽ**ङ्कुरादीनामङ्कुरकाण्डादीनामुत्पत्तिमिच्छन्ति** । बीजादीनि हि तेषां निमित्तकारणानि न समवायिकारणानि । समवायिकारणैश्च भवितव्यम् । अत आह । **किं तर्हि स्वेभ्य एवावयवेभ्य** इति विस्तरः । तद् यथाङ्कुराद्यवयवी अङ्कुराद्यवयवेभ्य । तेषामप्यङ्कुराद्यवयवाना स्वेभ्य एवावयवेभ्यः । तेषामपि

1 To adds तदा
2 See commentary on Kā., III, 49 (p 85, l 23) बहुविधप्रकारभिन्नैः etc.
3 To फलु 4 Mss. स्थूलाभावा०

स्वेभ्य एवेति। एवं यावत् परमाणुभ्यः। अन्यत्र परमाणूपसर्पणादिति। न जनने बीजादीना सामर्थ्यं किञ्चिदस्ति। अङ्कुरादिपरमाणूपसर्पणात्तु[1] तेषा सामर्थ्यमिष्यत इत्यभिप्राय.। अनियमो हि स्यादिति। तन्त्वादिभ्योऽपि कटाद्युत्पत्ति स्यादित्यर्थं। शक्तिनियमादिति। यथा बीजादीना सामर्थ्यनियमान्नानियमो भविष्यति। शब्दपाकजोत्पत्तिवत्। यथा शब्दोऽभिघातादिभ्यो विजातीयेभ्य उत्पद्यते। अथ च न यत· कुतश्चिद् गन्धरसादेर्विजातीयादुत्पद्यते। अभिघातादीनामेव विजातीयाना तदुत्पादने सामर्थ्यात्। तथा पाकजा रूपादयो विजातीयादग्न्यादेरुत्पद्यन्ते। अथ च न यत· कुतश्चिद्विजातीयाच्चक्षुरादेरुत्पद्यन्ते। अग्न्यादेरेव तदुत्पादने सामर्थ्यात्। वैशेषिक आह। चित्रो वै गुणधर्मः स्वजातीयेभ्यो विजातीयेभ्यश्चोत्पद्यते। स्वजातीयेभ्यस्तावद्रूपरसगन्धस्पर्शादय· कारणपूर्वा रूपरसगन्धस्पर्शादिभ्य एवोत्पद्यन्ते। विजातीयेभ्योऽपि संयोगविभागपाकजादय· कर्मादिभ्य·। तदेवं गुणधर्मो द्रव्यधर्मं प्रत्यनुदाहरणम्। त एव हि ते तथेति विस्तर। वीरणादय एव हि ते तथा तेन प्रकारेण कटादिरूपेण सन्निविष्टा व्यवस्थितास्तां कटसंज्ञा लभन्ते। पिपीलिकादिपंक्तिवत्। यथा पिपीलिकास्तथा सन्निविष्टाः पंक्तिरिति संज्ञां लभन्ते। न च ताभ्योऽन्यत् पंक्तिद्रव्यमस्ति भवतामपि सिद्धान्ते। कथं गम्यते तानि वीरणादीनि तथा सन्निविष्टानि कटादिसंज्ञा लभन्ते न पुनस्तेभ्यो द्रव्यान्तराणीति। अत आह। एकतन्तुसंयोगे पटस्यानुपलम्भात्। [2]आरब्धकार्ये ह्येकस्मिन् तन्तौ चक्षुःसंस्पर्शाभ्या संयुक्ते [3]तत्समवेत· पटोऽपि च ताभ्या सन्निकृष्ट इत्यसावपि तथैवोपलभ्येत। [4]यदि ब्रूयात् प्रतिबन्धात्तस्यानुपलब्धिरिति। अत आह। को हि तदा सतो विद्यमानस्य पटस्योपलब्धौ प्रतिबन्ध इति। नास्ति प्रतिबन्ध इत्यभिप्राय.। तस्मान्न पटो नाम द्रव्यान्तरमस्तीति। स्यान्मतम्। एकैकस्मिन् तन्तौ प्रदेशेन पटो वर्तते न सर्वात्मना वर्तत इति। अत उच्यते। अकृत्स्नवृत्ताविति विस्तर.। अकृत्स्नवृत्तौ पटस्य कल्प्यमानाया पटभागोऽस्यैकैकस्मिन् तन्तौ स्यान्न पटः। ततः किमिति चेत्। अत आह। समूहमात्रं च पटः स्यादिति वर्तते। एकस्मिन् तन्तावेको भागो अपरस्मिन्नपर इति तन्तुवर्तिनां बहूनां भागानां समुदायः पट इति च प्राप्नोति। न चेष्यते। कश्च तन्तुभ्योऽन्यः पटभाग इति कणभुग्भक्ता· प्रष्टव्याः। येन भागेनायमिन्द्रियसन्निकृष्टे तन्तौ

1 V ०सर्पणात्तु

2 Mss आलब्ध०

3 To. भवन्मतेन

4 Mss. गुण

वर्तेत । तस्मादेतामपि कल्पना कल्पयित्वा नातोऽन्य· पट· सिध्यति । स्यान्मतम् ' एकैकस्मिन्नपि तन्तौ पटो वर्तते । पटोपलब्धेस्तु पटेन्द्रियसन्निकर्ष· **पटस्यानेकाश्रयसंयोगापेक्षो** निमित्तमिति । अतो[1] ऽनेकाश्रयसंयोगापेक्षायामुपलब्धौ[1] कल्प्यमानायां **दशामात्रसंघाते गृह्यमाणे पट उपलभ्येत** 'न तूपलभ्यते' पटमध्यभागाद्यदर्शनात् । अथ मतम् 'नैव तदानीमपीन्द्रियेण मध्यादिभागाः सम्प्रयुज्यन्त इति । अतो दशामात्रसंघाते[2] पटोपलब्धिर्न भवतीति । तत इदमभिधीयते । **न वा कदाचि**दिति विस्तर 'न वा कदाचित् **पटोपलब्धिः स्यात् । मध्यपरभागानामिन्द्रियेणासन्निकर्षात्** 'नैव हि सम्भवोऽस्ति यत्तदारम्भका मध्यपरभागा सर्वे एवेन्द्रियेण सन्निकृष्येरन् । तथा च सति तन्त्वादिष्वप्येष प्रसङ्ग इति न च किञ्चिदपि कार्यमुपलभ्येत । **किञ्च क्रमसन्निकर्षे** चेति विस्तरः । यदा क्रमेण चक्षु· संस्पर्शनेन्द्रियं वा पटं गृह्णीयात्तदा पटग्रहणं न स्यात् ' युगपदनेकाश्रयसंयोगाभावाच्चक्षुःस्पर्शनेन्द्रिययो । एवमन्येषामप्यवयवाना ग्रहणं न स्यात् । **तस्मा**दिति विस्तर । यस्मात् क्रमेण पटबुद्धि कटबुद्धिर्वा **तस्मादवयवेष्वेव** पटावयवेषु कटावयवेषु[3] वा **तद्बुद्धिः** पटबुद्धि कटबुद्धिर्वा विकल्पवशाद्भवति । **अलातचक्रवत्** ' यथालाते शीघ्रसञ्चारात्तत्र तत्रोत्पद्यमाने अलातचक्रबुद्धिर्भवति तद्वत् । साधनं चात्र 'न द्रव्यसत् पट· 'अवयवग्रहणासापेक्षग्रहणत्वात् ' अलातचक्रवत् । **भिन्नरूपजातिक्रियेष्वि**ति[4] विस्तरः । भिन्नरूपेषु तन्तुषु नीलपीतादिभेदात् 'भिन्नजातिषु दुकूलकर्पासादिभेदात् ' भिन्नक्रियेषूर्ध्वाधोगमभेदात्[5] । **पटस्य रूपाद्यसम्भवात्** । कीदृशं तत्र रूपं भवतु ' जातिः क्रिया वा । स्यादेषा बुद्धि ' चित्रमस्य रूपादीति । तदेवं **चित्ररूपादित्वे** कल्प्यमाने **विजातीयारम्भोऽपि स्यात्** 'तन्तुवीरणयोरपि कटारम्भ स्यात् । तथा सति धर्मविशेषविपर्यय' प्राप्नोति 'अत्यन्तविजातीयारम्भकत्वं द्रव्याणां प्राप्नोतीत्यर्थ· । **अविचित्रे च पार्श्वान्तरे** एकपार्श्वचित्रस्य[6] **पटस्यादर्शनं स्यात्**' तस्य चित्ररूपाभिमतत्वात् । रूपदर्शने हि तदाश्रयद्रव्योपलब्धिरिष्यते वैशेषिकैः । [7]महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धि· । रूपसंस्कारा-

1..1 Mss ऽनेकाश्रयसंयोगानुपलब्धौ
2 Mss and To ०सङ्घाते
3 Mss omit कटावयवेषु
4 To क्रियास्विति
5 Mss ०धोसमभेदात्
6 To· पार्श्वविचित्रस्य
7 See Vaiśesikasūtra, IV, 1, 6-7

भावाद् [1]वायोरनुपलब्धिरिति वचनात्। चित्ररूपदर्शनं वा अचिले पार्श्वे स्याद् यदि पटो दृश्येत। चित्रं हि तस्य रूपमिष्यते। क्रियापि च चित्रेत्यतिचित्रमिति। एकं तद् द्रव्यं विचित्रक्रियमिति न युज्यते। क्रियावैचित्र्ये हि क्रियावदभिमतानां द्रव्याणामन्यत्वमिष्यते। तापप्रकाशभेदे चेति विस्तरः। अग्निप्रभालक्षणस्यावयविन आदिमध्यान्तेष्वारम्भकेषु तापप्रकाशभेदे स्पर्शनभेदो दृष्टः। स च तद्भेदस्तत्र यथाक्रमं तीव्रमध्यमन्दता। तस्यावयविनः प्रभाद्रव्यस्य तौ रूपस्पर्शौ नोपपद्येते। न ह्येकस्यावयविनोऽनेकं रूपं स्पर्शो वा युज्यते। तेन नावयवेभ्योऽवयविद्रव्यमन्यदस्तीति। अथ मतम्। यदि तन्त्वादिभ्योऽवयवेभ्यो न पटाद्यवयवी व्यतिरिक्तोऽस्ति। परमाणूनामतीन्द्रियत्वात्। न च तैरवयवैरैन्द्रियक आरब्ध इति। कृत्स्नं जगदप्रत्यक्षं स्यात्। प्रत्यक्षं च गवादि दृश्यते। तस्मादतीन्द्रियैः परमाणुभिरर्थान्तरमन्यदैन्द्रियकमारब्धमिति सिद्धिरित्यत्रोच्यते। परमाण्वतीन्द्रियत्वेऽपीति विस्तरः। यथा भवता वैशेषिकाणामतीन्द्रियत्वेऽपि समस्तानां कार्यारम्भकत्वं न व्यस्तानाम्। एवमस्माकमपि समस्तानामेव प्रत्यक्षत्वं न व्यस्तानामसत्यवयविन्यर्थान्तरभूते[2]। यथा चक्षुरादीनां चक्षूरूपालोकमनस्काराणां समस्तानां चक्षुर्विज्ञानोत्पत्तौ कारणत्वं नैकैकस्य। एवं परमाणूनामतीन्द्रियत्वेऽपि समस्तानां प्रत्यक्षत्वं नैकैकस्य। तैमिरिकाणां च पुरुषाणां विकीर्णानामसंयुक्तानां केशानां समूह उपलभ्यते अनारब्धेऽप्यवयविनि। न त्वेकैकः केशः। तेषां तैमिरिकाणां परमाणुवदेकः केशोऽतीन्द्रियः। इत्यतो नास्ति तेऽन्यद्द्रव्यम्।

तदेवमवयविनं प्रतिषिध्य रूपादिभ्यो गुणेभ्योऽर्थान्तरं गुणिनं[3] प्रतिषेद्धुकाम आह। रूपादिष्वेव चेति विस्तरः। रूपादिष्वेव परमाणुरिति संज्ञाविनिवेशः। तद्विनाशे रूपादिविनाशे सिद्धः परमाणुविनाश इति। वैशेषिका आहुः। द्रव्यं हि परमाणुः। अन्यच्च रूपादिभ्यो द्रव्यम्। रूपगन्धरसस्पर्शवती पृथिवी[4] इत्येवमादिसिद्धान्तवचनात्। अप्रयुक्तमस्यान्यत्वम्। यस्मान्न केनचित् परिच्छिद्यन्ते इमानि पृथिव्यप्तेजांसि। इमे एषां पृथिव्यादीनां रूपादयो रूपरसगन्धस्पर्शा गुणा इति। ब्रूयादतीन्द्रियाणि तत्त्वतो[5] न निर्धार्यन्त इति। अत आह। चक्षुःस्पर्शनग्राह्याणि च तानि पृथिव्यादीनि प्रतिज्ञायन्त इति। दग्धेषु चेति विस्तरः। ऊर्णादीन्यवयविद्रव्याणि न पच्यन्त[6] इति पैलुकाः। तदुक्तं

1 Mss वायावनुप०
2 To following Tib असत्यप्यवयविन्य०
3 Mss & To गुणिना
4 Vaiśeṣikasūtra, II, 1, 1
5 To. दह्यन्त
6 To following Tib तान्यती

भवति । प्राक्तनगुणनिवृत्तौ पाकजगुणोत्पत्तौ तदाश्रयास्तु द्रव्याणि तदवस्थानान्येव भवन्तीति । तथैवोर्णादिबुद्धिः स्यात् । न च भवति । तस्मात्तद् व्युद्धयभावात् रूपादिष्वेव तद्बुद्धिर्न द्रव्येऽर्थान्तरभूत इति । यदि हि ऊर्णादिद्रव्यं[1] रूपादिभ्यो[2] [3]ऽन्यत् स्यात्तत्तदवस्थानं भवतीति रूपादीन्येवाग्निसम्बन्धादुष्णेन निरुद्धानीत्यूर्णादिबुद्धि स्यात् । न च भवति । तस्माद्रूपादिष्वेवोर्णादिबुद्धिः । वैशेषिका आहु । यदि रूपादिमात्रं घट स्यात् । अग्निसम्बन्धाद्रूपादीनि पाकजादीन्यन्यान्युत्पद्यन्त इति स एवायं घट इति न परिज्ञायेत । यस्य तु पाकाद्रूपादीन्येवोत्पद्यन्ते निरुध्यन्ते चेति स एव घटस्तदवस्थानो भवतीति तस्य तत्[3] परिज्ञानं[4] युज्यत इत्यत इदमुच्यते । **पाकजोत्पत्तौ घटपरिज्ञानं संस्थानसामान्यादिति** । रूपाद्याकृतिसामान्यादित्यर्थः । **पंक्तिवत्** । यथा न वस्तुत पिपीलिकाना तद्व्यतिरिक्तं पंक्तिद्रव्यं नामास्ति । अथ च पूर्वपंक्तिसंस्थानसामान्यादन्यस्यामिति तत्परिज्ञानं भवति सैवेयं पिपीलिकाना पंक्तिरिति । आह । **कथमेतदूगम्यते** संस्थानसामान्यात् परिज्ञानं न तु तादवस्थ्यादिति । अत्रोच्यते । **चिह्नमपश्यतोऽपरिज्ञानादिति** । यस्मात् खण्डनिम्नोन्नतादि चिह्नमपश्यतस्तत्परिज्ञानं न भवत्यत संस्थानसामान्यादिति सिद्धम् ।

**सा चेति** विस्तर. । सा च प्रीतिः **प्रश्रब्धियोगेन** । [5]प्रीतेर्मनस. प्रश्रब्धिर्जायत इति प्रश्रब्धियोगेनाश्रयमृदुकरणादपकल्पा[6] । **अत एव चेति** विस्तर । आश्रयमृदुकरणात् । **तस्मिन् द्वितीये समापत्तिध्याने कृत्स्नस्य** [7]**कायस्थैर्यस्यापगमाद्दुःखेन्द्रियनिरोध**[8] उक्तः । सुखस्य च प्रहाणाद् दुःखस्य च प्रहाणात् । पूर्वमेव सौमनस्यदौर्मनस्ययोरस्तंगमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरतीति वचनात् । **आध्यात्मिकापक्षालरहितत्वादिति** । ये वितर्कविचारादयोऽष्टावाध्यात्मिकापक्षाला

[9]वितर्कविचारौ चासू[9] सुखादि च चतुष्टयम्[10]

इति । तद्रहितत्वादित्यर्थः । **आनेञ्ज्यमिति** । एजृ कम्पन[11] इत्यस्य

---

1 Mss द्रव्य  2 Mss रूपादि

3 3 Mss omit this portion which has been restored from Tibetan by Poussin and adopted in To

4 Mss विज्ञान  5 Mss प्रीर्ति  6 Mss ०दसतकल्पा

7 Mss कायकार्य०  8 Mss दुःखनिरोध

9 9 Mss वितर्कविचार्योश्रासो च, To वितर्कविचारौ चासू च

10 Kārikā, VIII, 11

11 Mss कम्पनम्, but see Dhā , 1, 253

धातोरेतद्रूपमानेञ्जयमिति। यदा त्वानिञ्जयमिति पाठस्तदा इगे.[1] प्रकृत्यन्तरस्यै-तद्रूपं द्रष्टव्यम्। न तैः शुद्धावासकायिकैः शक्यमारूप्यान् प्रवेष्टुं विपश्यना-चरितत्वात्। शमथचरिताश्चारूप्या। नाप्यन्यत्र गन्तुमधरां भूमिं विशेष-गामित्वात् ॥१००-१॥

[सप्ताग्निनाद्भिरेकैवं गतेऽद्भिः सप्तके पुनः।
तेजसा सप्तकः पश्चाद् वायुसंवर्तनी ततः ॥॥१०२]

एतेन क्रमेणेति। यथोक्तेन सप्ताना [2]तेजःसंवर्तनीनामनन्तर-मद्भिः संवर्तनी भवत्येका। पुनः सप्तानां [2]तेजःसंवर्तनीनामनन्तरमद्भिः संवर्तनी भवति द्वितीया। एवं यावत् सप्तम्यद्भिः संवर्तनी।

एवं गतेऽद्भिः सप्तके पुनः।

तेजसा सप्तकः

ततः

पश्चात्

एका

वायुसंवर्तनी

भवति। किं कारणम्। यथावर्णितं बहुना कालप्रकर्षेणापूसंवर्तनी भवति। ततोऽपि बहुतरेण वायुसंवर्तनीत्यत इदमुच्यते। यथैव हि तेषामिति विस्तरः। यथा प्रथमध्यानाद् द्वितीयध्यानसमापत्तिविशेषाद्दात्मभावाना द्वितीयध्यानभूमिकाना स्थितिविशेषः। अर्धमहाकल्पार्ध[3] प्रथमध्यानोपपन्नानामायुःप्रमाणम्। कल्पद्वयं द्वितीयध्यानोपपन्नानामिति। [4]तथा भाजनानामपि। किम्। स्थितिविशेष इति। एवं द्वितीयादपि तृतीयध्यानस्य विशेषो वक्तव्यः। एवं च कृत्वेति। यस्मादष्टकृत्व[5]-स्तेजःसंवर्तनीसप्तका इति षट्पञ्चाशत्तेजःसंवर्तन्यो भवन्ति। सप्ताप्-संवर्तन्य एका वायुसंवर्तनीति चतुःषष्टिः संवर्तन्यो भवन्ति। तस्माद् यदुक्तं प्रज्ञप्तिभाष्ये चतुःषष्टिः कल्पाः शुभकृत्स्नानामायुःप्रमाणमिति। तत् सूक्तं भवति। [6]यथा

ऊर्ध्वन्तु परीत्ताभेभ्य आश्रयः।

द्विगुणद्विगुणाः[7]

इत्यत्नोक्तं शुभकृत्स्नानां चतुःषष्टियोजनानां शरीरप्रमाणम्। शरीरप्रमाणेन

1 C इञ्जेः, V इञ्जे, see Dhā, I, 163

2 Mss ०संवर्तनीयानाम्

3 Mss ०कल्पार्धस्य

4 Mss यथा

5 Mss दष्टकृत्व

6 Mss तथा

7 Kārikā, III, 77.

च तेषामायु·प्रमाणमुक्तम् ।

आयुस्तु कल्पैः स्वाश्रयम्[1]

इति वचनात् । एकैका संवर्तनी महाकल्प[2] इति कृत्वा । इयता हि कालेन तेपामायुष परिसमाप्तिरिति ॥१०२॥

आचार्ययशोमित्रकृतायां स्फुटार्थायामभिधर्मकोशव्याख्याया

तृतीयं कोशस्थानम् ॥

---

1 Kārikā, III, 80 2 Mss ०कल्पम्